# ॥ रहस्य लहरी ॥

वा

## हिन्दु प्रमाण निर्णयः

जिस में हिन्दु शास्त्रों के अविरुद्ध शास्त्र प्रमाण ग्रन्थ कितने हैं यह निर्णय विरोधों को हटाने के तरीके दिखला कर

पं० हरिदत्त त्रिवेदी ने किया है



जो कि

नेशनल यंत्रालय अमृतसर में बाबू हर्जिराम के प्रबन्ध से प्रकाशित हुआ। की.=)

ॐ श्री शैवोविजयते तराम् ॥

विज्ञानैकसदानन्द मायाकल्पितसंसृतौ शिवादि स्तम्भ पर्यन्ते ममधर्मैरतिःस्वके १

अवश्यं हिसर्वस्यायतन प्रवृत्तिक धर्मस्यवेदप्राधान्यात्त दुपजीवि स्मृतिमूलकस्यसाक्षाद्वेदोदितस्यच प्रामाण्य मित्यभ्युपग च्छतां वेदमूलकत्वेनैव प्रामाण्य मायातीति सर्वस्यवेदाः प्रमाण मितिस्थिति रतएव 'धर्मस्यशब्दमूल-त्वाद शब्दमन पेक्षंस्यात् (जै०सू०) १।३।१। अपिवाकर्तृ-सामान्यात्प्रमाणमनु मानंस्याद् ।१।३।२। जै०सूत्राभ्यांस्मृति प्रामाण्योक्तौ औदुम्बरी सर्वा वेष्टयि तव्येति सर्ववेष्टनस्य स्मार्त्तस्य पशुबन्धनस्थानवेष्टन श्रुतिविरुद्धस्य 'विरोधे त्वन पक्षंस्या दसतिह्यनु मानमिति जै० सू० १।३।३। प्रामा-ण्या भावउक्त स्तेनचहेतु दर्शनाच्च।१।३।४।इत्यनेन लोभादि मूलकत्वेन रागप्राप्त मात्रतया बाधएव तस्यबन्धन स्थानाव च्छेदेन सर्वावेष्टयि तव्येति तदर्थकरणेतु विरोधा भावेन

प्रामाण्यम भ्यनुज्ञातम् इत्यवश्यंमितिहास पुराणाभ्यां वेदार्थ मुपबृंहयेदितिस्मृतिपरिशीलितन्यायैं र्विचारितस्य वेदार्थस्यस्मृति विरोधे तत्परिहारेण स्मृतेस्तदनु नयोवि धातव्यः इति जैमिन्यादि मतमेवंच स्मृतेरापिवैदिकोधर्मः सच्चस्मृति ज्ञानाधीन इति स्मृति शब्दार्थः प्राङ्निर्णेतव्यः साचस्मरणं स्मृतिरितिव्यु त्पत्या वेदसाक्षाच्छ्रुतस्या र्थस्य श्रावण प्रत्यक्ष विषयशब्द जनितार्थ वोधस्य स्मरणं स्वमुल भूतार्थ वोधक मूलवेदानुमान द्वारा प्रामाणंतदेव लोकशब्द व्यपदेश्यं यथा लौकिक वैदिकेषु इत्यादि व्याकरण महाभाष्या दौधर्मशास्त्रीय ग्रन्थे लोकेतावदभक्ष्यो ग्राम्य कुक्कुट इत्यादिनालोकशब्देन स्मृते र्ग्रहणस्य स्फुटत्वात्र धर्मशास्त्रयाज्ञवल्क्यादि–स्मृति शब्देन कथ्यते लोक प्रसिद्धेः मन्वर्थ विपरीतायासास्मृति नैवशस्यते इत्यादिनामन्वादौ स्मृतावपि धर्म शास्त्रे स्मृति शब्दे प्रसिद्धरी क्षतेर्नाशब्द मिति १।१।५। व्याससूत्रे अप्रतर्क्य मनिर्देश्य मिति ।१।५। मनुश्लोके शङ्करभगवत्पादैरपि स्मृति व्यवहार करणाच्चेति केचिदकृताधियःकुधियो नाधि गत शास्त्र पथाःकुपथमनु प्राविष्टा एकदेशिन, स्तदातिस्थ वीय

वेदार्थ स्मरणतत्त्व पुराणतन्त्र धर्मशास्त्र दर्शनसाधारण्यात् लोकेऽपि शिष्टानां तथा प्रसिद्धेः म्लेच्छानां भवादृशानां प्रसिद्धितः शास्त्रं प्रमाण शिष्ट प्रसिद्धे जैमिनीयेयव शब्द स्य शिष्ट प्रयोगादीर्ध शूकविशिष्टे प्रसिद्धे नम्लेच्छ प्रसि- द्धितःकङ्गुशक्ति रिति शिष्ट प्राबल्याधि करणे१।३।८।१।३।९ सूत्राभ्यां प्रब लत्वा वधारणेन भवा दृश लोक प्रसिद्धेर प्रमाणिकत्व निश्चयात् म्लेच्छाहि भवन्तः सर्वधर्म बहि ष्कृतत्वात् तथा हिकिं धर्मायूयं वैष्णवा इतिचेद्वदत श्री कृष्णःशरणंममरामःयनमः ओंनमो नारायणायनमो भगवते वासुदेवायेत्यादिमन्त्राञ्जपन्तएववैदिका वय मिति वक्तुंशक्नुवतांकिम् नोचेन्म्लेच्छा वेदबाह्याएव त्यक्तगायत्री कत्वात्-१

---

१—अत्र वैष्णव त्वावच्छे देनम्लेच्छत्वापादनं नार्पितम्नम्रा णाम् वैदिकत्व मजथत्वंवापाद्यते स्वस्यापिवस्तुतो वैष्णवत्वादि तम्नस्पद व्यपदेश्यत्वात एतत्पुस्तक पर्यालोचने वैष्णव शाक्त सौर गाणतशैव वैदिकस्मार्ततान्त्रिकदक्षिणवाम पदानांद्विजेषुसामानाधि करण्ये नैवला भात स्वस्यसकल मन्त्रविश्वासित्वा त्तेषामेवप्रामाणि कत्व वैदिकत्व साधनार्थमेव प्रयासा देषंगाण पत्रादाववसेमच

अथस्मृतिप्रामाण्यास्मार्त्त धर्मो भवतां निदर्शयत मनुस्मृ-
तौ क्वायंमन्त्रकलापो भवतां क्वचिदन्यत्रचेन्मन्वर्थ विपरी
तायासास्मृति नैवशस्यतेइति मनुविरुद्धत्वेनाभिमतत्वे
ऽप्रामाण्यापातः।अथहारी तादिस्मृतिं प्रमामाणयतचेत्किं
मेकांता मेवोतस्मृत्यन्तरमापितामेवचेत्तप्त शीतादि शङ्ख
धारणंतत्रनलभ्यते नचास्यावीधिस्तदर्थं स्मृत्यन्तरगवेषणं
नात्रैकादशी सत्यनारायणादि ब्रतकाथादिक लापस्तदर्थक
माश्रयतनापि नमोभगवते इत्यादिमन्त्रक लापस्तदर्थं
विष्णुस्मृतिगवेषणेतत्र ७४ अध्यायेश्राद्धेमांसदानस्या
त्यन्तमुपयुक्ततयागौत्तमस्मृतौ ८ मेध्पायेनिरुढपशुवन्धादे
र्विधानाद्वृहद्गौतमेपञ्चदशोध्याये नावतुल्यान्तिये विप्रानि
धृत्ताश्चपशोर्वधंते यान्ति नरकंघोरंरौरवं तमसावृतस् शतव
र्षसहस्त्राणि तत्रास्थित्वानराधमाः क्रमिभिर्भक्ष्य माणाश्चतिष्ठे
युःपूयशोणिते यूपास्तु उक्तसंस्कारै रोषध्यः पशवस्तथा यज
मानेनसहिताः स्वर्गयान्ति नरेश्वरे त्यादिना देवतार्थमांस
निषेधस्य भगवता कृष्णेनयमंप्र तिरौरवनरकेहतु तयोक्त
त्वात्तन्निषधकत्वे चण्डालत्वापातः सकलस्मृति प्रामाण्या
भ्युपगमेपिएवमोभिर्दोषैः पतितसावित्री काम्लेच्छधर्मेगताः

स्थएकपङ्क्तौ सीलल प्रसादाद्युच्छिष्ट भोजनं चर्मकार
प्रभृतीनामच्युतगोत्रीयत्वेनावधारणंकिंभैरवीचक्रं मन्यन्तः
पठित मुतकस्याश्चित्स्मृते रिरिविचारयन्तः स्वाचारेकिंनाजि
ह्रीथतिएवमेव शैवादिषुतत्तदेकस्मृत्य वलम्बेनसकल
स्वधर्म स्वाचाराणा मन्तर्भावयितुमशक्यत्वाच्छैवशाक्त
वैष्णवगाणपतसौरस्मार्त्तपौराणिक वैदिक तान्त्रिकदक्षिण
वामादिपदवीन्नकान्यपिद्रष्टुंक्षमध्वंकाविरोद्धुमितिसर्वधर्मव
हिष्कृतानां स्मृतिपदस्यधर्म शास्त्रप्रसिद्धिर्यवपदस्यकङ्गावि
वनप्रमाणंकिन्तु शिष्ट प्रसिद्धेस्तन्त्रपुराणधर्मशास्त्रदर्शनसर्व
साधारणी स्मृति पदशक्ति रेवंमन्वर्थ विपरी तेत्यादिषु
स्मृतिपदस्यनकेवलं धर्मशास्त्रे शक्तिरवाधारयितुं पार्यते
पुराणादि सकल साधारण्येऽपि स्मृतिपदस्य मन्वर्थ विरोधः
शास्त्र विचारे वर्ज्यत्वेनात्यर्थं समीक्षितव्य इतितदाशयो
पपत्तौधर्मशास्त्रएव स्मृतिपदशक्ति मन्वादा वित्यस्या युक्ति
सहत्वात्एवक्षमीक्षतेर्नाशब्दामिति१।५सूत्रेशाङ्करेमन्वादौधर्म
शास्त्रस्मृति पदप्रयोगदर्शनेननतावन्मात्रेशक्ति रवधारायितुं
शक्यते स्मृत्यनवकाशदोष प्रसङ्ग इतिचेन्नान्य स्मृत्य
नवकाशदोष प्रसङ्गात् २।१।१। सूत्रे कपिलादि दर्शनेषु

स्मृतेश्च ४ । ३ । ११ अपिचस्मर्यते १।३।२३। सूत्रयो र्गीतादौ पुराणदौच सर्वत्रास्तिक सम्मत प्रमाण ग्रन्थेषु आर्षे यत्वेना भिमतेषु स्मृति शब्दस्यशक्तेः प्रामाण्यात् धारणात् स्मृत्य नवकाशेत्यनेनचस्मृति मात्रस्य समग्रा भारायानिश्चया त्स्मृति प्रामाण्यवादिनासकल शास्त्रसम प्रामाण्यनिश्चित धर्मस्यैव सनातन त्वेना ध्यवसायः यद्यपि लोकेऽनुभवः प्रमाण मिति प्राभाकरादयोऽनाधि गताबाधित वितवृत्तिः प्रमाणामिति भाट्टादयोलक्षणमैषिषन् प्रमाणा नामिति स्मृतिरप्रमाण तथापि यथार्थानु भवजानित संस्कार मात्र जन्यानुभवसमान विषयतया संवादात्स फल प्रवृत्ति जनकत्वाच्चानु मित प्रमाण्यिका संभवन्ती स्वतः प्रमाणशून्याऽपि स्वतः प्रमाणेवद मूलकत्वेन यथार्थ वेदार्थानु भवजन्यत्वेन संवादि सफल प्रवृत्ति जनक त्वे नोत्तरकाले वाधादिशून्यत्वेनच नवारयितुं शक्यतेह्यार्ष स्मृतिस्तद भिलापक शब्दरूपपुराण तन्त्र धर्मशास्त्रादि- सकलार्ष ग्रन्थाश्च सुतरां प्रमाण मेवेति पुराणा द्यन्यतम स्ववेदार्थानुभवज

नित संस्कार मात्रजनितार्षज्ञाना भिलापक शब्द प्रयोगत्वं तादृशज्ञानपूर्वकार्ष धर्मोपदेशत्वंवा॥१ तन्त्रादि सकल साधारणमेवस्मृतित्वम् स्मरण मितिव्युत्पत्तेस्तत्रसाक्षादुपलभ्यमान वेदेनस्वार्था नुवादकत्वेनावधार्य स्मृतित्व मनुपल भ्यमान वेदस्य शिष्ट कोपेविरुद्धमपिवा कर्तृसामान्या त्प्रमाणमनुमानं स्यादि तिजैमिनीय १।३।२। रीत्या मूल वेदानुमापकत्वेनसमंतन्त्रादिषु स्मृतित्वेन प्रामाण्यं,वेदशाखा ॥१ सुचमहा भाष्येसहस्त्रव

---

१—करणव्युत्पत्त्येदं शास्त्र परंतत्त्वधर्मपदस्यलक्षणयाशास्त्रयावावि-धेयार्थ यागादि परत्वे तदुपदेश योग्यत्व स्यैवसामान्येजस्येऽधिकं मन्त्रादिष्वति व्याप्ति वारणाय तादृशज्ञान पूर्वकार्षो पदेशत्वं परित्यज्य धर्मो पदेशकत्वपदमर्थवादादेस्तत्रतत्रो पलभ्यमानस्यापि वेदवद्विधि प्ररोचकत्व सेवेत्यादि धर्मबोधक वेदानुकूलैवजैमि निन्यायाद्यवस्थास्मृत्यादाविति बोधयितुं तेन तन्त्रासंवादिनोऽज्ञात पुराणतत्वान वैदिकानामपिस्मार्ता इतितदुपदेशेपुनाति व्याप्तिः

स्त्री सामवेद एकशत मध्वर्यु शाखाः सप्तधा वाह्वृच्यं नवधाऽथर्वणोवेद इतिवाहुल्यं प्रसिद्धमेवानुपलभ्य मानत्वाच्चो च्छेदोऽनुमीयते तत्कल्पनया चानुपल भ्यमान मूलवेदानां प्रामाण्यंकर्त्तृ सामान्याच्च सम्भवन्नवारयितुं पार्यतेयत्तु मेधातिथि वचनं शाखाःकाश्चित्समु च्छिन्ना पक्षोनैष मतोमम पक्षेस्मिन्न प्रमाण

म्बठ्हदृष्ट प्रसज्यते नित्यानुमेय पक्षोयेवा प्यागम पर म्परातयोरन्ध प्रवाहत्वंनभेदः कश्चिदीक्ष्यते इति वेदशाखा भावाभि प्रायंन तथातद्वक्तव्यं सम्भवति उपलभ्यमा नमूलकत्वेन प्रामाण्ये तदनुरोधेनैवार्थ निर्णयोनतु मूल वेदान्तर कल्पने नेत्याशयात् यत्रहि स्मृति रेकापलभ्य मानमूल वेदिका एकाचानु पलभ्यमानमूल वेदिका

---

१ः शाखानां मूला पेक्षत्वेन नतथा प्रामाण्यं शाखास्विवतित्वदृष्ट बैसिन्यादिमदान्धाशास्त्रगन्धादयानन्दवादाःशाखातिरिक्तवेदस्यानु पलभ्यमान त्वात् यजुर्वेदे पीषेत्वेत्यादौतेन मूलत्वेनोरीकृते माध्यन्दिनीय शाखा त्वाद् वेदशाखासुचावयवे शाखापद प्रयोगात् स्मृति मूलत्वेन सर्वशाखासुमूल वेदत्व सम्याद्वृक्ष शाखा मूलादौ अवयवेएव शाखा मूलपदयोः प्रयोगदर्शननशाखावेद मूलवेदयोः पर्यायतयैवा वयवान्तरतार्थक प्रयोगस्य युक्तत्वात्स्वतयो:सास्यमेव

तद्विरुद्धोपलभ्यते तत्रोपलभ्यमान मूलवेदाऽनुसारेणार्थ निर्णयोऽपरस्मृतेश्चतदनुकूलत्वेनाविरोधपरिहारोनतुमूलवेद स्यानुपलभ्यमानस्यकल्पनेन कल्पित प्रामाण्यानुसारेणना पित्ताद्धि कल्पादि विचार इत्याभि प्रायेणहिमूलवेदानुमान स्याकिञ्चित्करत्वाभिधानरूपनिन्दार्थवादः तत्राहिअनुमित वेदस्यप्रत्यक्षविरोधेनवाधादनुमानंनसंभवतीतितदाशयःय थात्रयीधर्ममधर्माढ्यंनसम्यक्प्रतिभातिमेइतिमोक्षधर्मेमह भारतेहिंसायुक्तत्वेनयागस्याधर्मत्वादनुष्ठानाभावआपात तः प्रतीयतेअन्यत्रवृद्धगौत्तमस्मृतौरौरवनरकाभिधानंयाग हिंसाप्रतिषेधविष्णवादिस्मृतौ श्राद्धयागदेवार्चादिषुवैष्णव पश्वादिवधउक्तस्तयोर्विरोधे सोमेराजन्यागते इत्यादिना ऐतरेयब्राह्मणे १ पञ्चिकाया१५शखण्डे आप्रायणीये वैष्ण वयागे पशुवधउक्तोमूलवेदोत्र प्रत्यक्षत उपलभ्यते अन्यत्र सामादौ यजुर्मन्त्रेषु दार्वाघाटादीनां पशुपक्ष्यादीनांत्ततद्या गगणना २४ अध्याये २० तःसमारभ्यवहुभिर्मन्त्रैस्त थेडा भक्षणंचयजमान पञ्चमाइडांभक्षयन्तीत्यादिशतपथेविहि तपिण्डपितृयज्ञातिदेशो गोपथेऽपिषाण्मासिकनिरूढपशुहिं सा २।१।पितृयज्ञेऽतीदिष्टे त्यादिमूलवेदस्य साक्षादुपलभ्य

मानत्वेन त्रयीधर्ममधर्माढ्यंनसम्यक् प्रतिभातिमे इत्यस्य
मूलवेदोनानुमेयोऽपितस्य शान्ति स्तुत्यर्थत्वेन संन्यास
प्रशंसापरत्वंतत्प्रकरण पठितत्वादि तितस्य हिंसा निषेध
तात्पर्यकत्वेन स्वामिनारायणा दिमतवद्वेदनिन्दकत्वेन वा
व्याख्यान मयुक्तत्वादितिमेधा तिथिमहर्षेराकूतम् अन्यथ
सहस्रवर्त्मा सामवेदइत्यादि महाभाष्य वेदतच्छाखागणन
परमुक्ति कोपनिषदादि विरोधापातात्स्मृत्या मूलवेदानुम
नेनप्रमाण्यमित्यर्थक जैमिनिवचनस्य शिष्टाकोपेअपि
त्यादि पूर्वोक्तस्या प्रामाण्यम्प्रसज्येत तच्चानिष्टं स्मृत्यन
काशदोषेतिव्यासोक्तेःसर्वेषां मूलवेदद्वारा प्रामाण्यंस्मृति
वाक्याना मितिस्थिते श्चतुर्विधाःस्मृतयः धर्मशास्त्रपदव्य
देश्या दर्शनपदवाच्याः पुराणेतिहास पदवाच्यास्तन्त्राभि
लप्याश्चेति अत्र तन्त्राणाम्प्रामाण्यमेवन कुतस्तरां स्मृति
त्वमित्याहुरेके तन्त्रंनधर्मेप्रमाण मबौद्धादिभिरनुष्ठे
त्वात् १ वाममार्गीयत्वात् २ वेदाननुकूलत्वात् ३ भैरव
व्यादिमृतमनुष्यदेवतोद्देश्यकोपदिश्यमानाविधित्वात्४स
जातिशुद्धकरत्वात् ५ वेदविरुद्धाहिंसादिघाटितत्वात्
शिष्टापरिग्रहत्वात् ७ शिष्टपरिग्रहीतु मयोग्यत्वात्
महापातक संसर्गि परिग्रहयोग्यत्वात्

सत्ययुगादावस्वीकृतत्वेनासदातनत्वात् १० महर्ष्यति रिक्तकल्पितत्वा ११ न्निरर्थकाक्षर मन्त्रत्वात् १२ अनुपलभ्यमानफलकत्वात् १३ अहंभैरव इतिभावनोपदेशकत्वेन स्वातिरिक्त देवतानिषेधकत्वात् १४ तादृशभावना विशिष्ट पुरूषप्रणीतत्वेनज्ञायमानत्वात् १५ सुरामांसरेतोभक्षरणदे विधायकत्वात् १६ अशुचिसम्पार्किक्रिया विधिरूपत्वात् १७ इतिहितेषामा शङ्क्यमानहेतवः एभिश्चहेतुभिरहेतुभिरेतेतन्त्राणांधर्मेऽप्रामाराय्यमाहुः तेषामेषाकुसृष्टिकल्पनाक्रमशःखण्डूयते प्रथमंतन्त्रत्वावच्छेदेनसाध्यसिद्धावुद्देश्यायां भागासिद्धोहेतुःबुद्धउवाचेत्यादिषुकेषुचित्सम्भाव्यमानतदनुष्ठानेऽपिसर्वेषांबुद्धादिभिरनुष्ठीय मानत्वसाधकाभावात्अहिंसा परमोधर्मइत्य नुशासनवतांतेषांबुद्धप्रभृतीनांभवद भिमतार्थकमाहिंस्यात्सर्वाभूतानीति,वेदवाक्यान्तर्भावेण व्यभिचारात् सामानाधिकरण्येनापिनहेतुःक्षणिकवादाभाव वत्प्रामितत्वा भावस्योपाधित्वाच्चतस्यक्षणिकत्मवादबौद्ध शास्त्रान्तर्भावेण साध्यव्यापक त्वान्नित्यविज्ञानंकारणंस्पन्दात्मकं कार्यंसोहमिति प्रत्यभिज्ञा भोगमोक्षहेतु : शिवशतयात्मक नित्यविज्ञानस्य जगद्धेतुत्वेनशक्ति

चक्र संधाने परमेश्वर्यलाभादि बोधक शिवसूत्र प्रत्यभिज्ञा कारिकानुसारि वेदान्तिभिःसम्मते प्रकृतिश्च प्रतिज्ञादृष्टा न्ता नुपरोधादिति २।१ व्यासोक्तवेदवादे पक्षेसाधनाव्याप कत्वाच्च अस्यैवहि प्रत्यभिज्ञादर्शनस्य व्यावहारिक पार मार्थिक दृष्टिभेद विज्ञान विभेदनच्छायारूपाद्वैता द्वैत शुद्धाद्वैत विशिष्टाद्वैत वादाः परिणाम्यु पादान विवर्त्तो पा दानभेदेनाद्वैतवादःशाङ्करश्चसगुणब्रह्मोपासनायाउभयफल त्वस्यनिर्गुणो पास्तेश्चकैवल्यमात्रफलत्वस्यशङ्करभगवत्पादै रभिहितत्वात्किश्चकाचिद्बुद्धउवाचशब्दमात्रघटितत्वेनन बुद्धप्रणीतत्वम्बौद्धानुष्ठायित्वंवासंभवति मन्त्रोपदेशवद्वै रवात्मकसर्वेश्वरेणभवारूद्रौसंयुजासंविदानौ, १।२।१ द्रापे ऽन्धसस्पते १०।१। स्तुहिश्रुतंगर्त्तसदं युवानामिति २।१।८। अथर्वर्गादिवेदैरेव प्रमितेन सर्वेश्वरेण सर्वज्ञनाथेन प्रणीत त्वस्यमहतोभूतस्यनिः श्वासितमेतद्यदृग्वेदो यजुर्वेद इत्यादि २।४।१०बोधितत्वेनतस्यैव बुद्धेनोपदेश इतिसिद्धा न्तो मनूपदिष्टस्य भृगुणोपदेशवत् इतितदुपादिश्य मानत्व हेतुना बौद्धाद्यनुष्ठानस्य साधयितुमशक्यत्वात् स्वरूपा सिद्धोहेतुः बौद्धानुष्ठि तानितन्त्राणि बुद्धप्रणीतत्वादि

त्यनुमान प्रयोगेहेतोर सिद्धत्वाद् भवदभिमतार्थत्वेऽपिभा
गासिद्धत्वाच्चबुद्धशब्दस्यवेदान्तज्ञानवतोपायःसर्वज्ञइतिश्रु
तिवोधितस्या भिधानाच्च नास्तिक वौद्धानुष्ठीयमानत्वसाध
नेहेतोःसाध्याभाव व्यापकत्वेन विरोधश्च क्षणिकात्मासि
द्धान्तकत्वमास्तिकानभ्युपगतत्वंवोपाधिःअभ्युपगमवादेन
बुद्धप्रणीतत्वेऽपिनाऽऽस्तिका नांकचित्तन्त्रेऽनादरस्तत्र बुद्ध
स्यविष्णववतारत्वेन हिंसानिषेध द्वारायागोच्छेदेनदैत्येषुनि
र्वलतापादनार्थ तदुक्तेर्वेद विरुद्धतयानाऽऽस्तिक सम्मतत्वं
नास्तिकसम्मतत्वंच यागानुकूल तदीयतन्त्रोक्तेस्तु वेद
वत्प्रत्युतस्वतः प्रमाण्यापत्तिरन्यथा निःश्वसितो वेदइति
ईश्वर प्रोक्तवेदस्यापितेनैव प्रणीतत्वादनादरः प्रसज्येतश्वा
सस्यावतारमन्तराभावेन बुद्धानवतारवादिनांवेदाप्रमाण्या
पात इत्यादिचिन्त्यम् वाममार्गीय त्वादितिद्वितीयोहेतु रपि
नयुक्तः वामंशोभन दुष्टयोरिति कोशेन शोभनमार्गीयत्व
हेतोःसाध्याभाव व्यापकत्वेन विरुद्धत्वात् अप्रयोजकत्वा
द्वैदिके व्याभिचाराच्च दुष्टमार्गीयत्वार्थ कत्वेतन्मार्ग दोषस्या
सिद्धत्वेन विशेषणासिद्धोहेतुः वामोदुष्टः सुरामांसादिघ
टितत्वादितिहेतु कवाक्य प्रयोगे वैदिकयागीयेषु सर्वत्रा

स्तिक सम्मतमार्गेषुव्याभिचारोहेतोः सुरातुमल मन्नानां पाप्माचमल मुच्यते ११।१३ इतिमनूक्तयवादिपिष्ट विशेस्यविकृतिमा पादितस्याग्न्यसंपृक्तस्य सुरापदार्थत्वेन सौत्रामणिसोमादौगृहीतत्वात् सोमोभूत्वाद्दि जातीन्यायुङ्क्ते श्रेयोभिरूत्तमैरिति द्वादशाध्यायेचरकेनर्चिस्वा दुष्किलायं मिति ४अ०। ३२। वेदेचसोमशब्देन मद्यस्यैवग्रहणात्आश्वलायने मातृश्राद्धे २ अ० ५ क०।५ सूत्रे सुरादानोक्तेश्च सुराशब्दः क्वचिन्मद्यमात्रे प्रयुक्तो गौणएव महापातकेषु मुख्यग्रहस्यैव युक्तत्वान्मिता क्षरायांमद्यशब्दस्य गौणप्रयोगस्सुरायां व्याख्यातश्च तन्त्रेमधु मद्या सवारिष्टानां ग्रहणे नापि विधिसंभवेन तेषांसुराघटितत्वा सिद्धेश्च यज्ञातिरेकेण सुराग्रहणस्यादी क्षिता संस्कृत विषयस्य दोष प्रयोजकत्वेना प्रयोजकत्वात् । विशिष्टतादृशसुराघटितत्वहेतुकरणे स्वरूपासिद्धेश्च षोडशहेतु विचारेऽधिकंवक्ष्यामः मांसघटितत्वहेतौ किंमांसत्वं प्राण्य–१ङ्गविशेषत्वंचेद्व्रीहि

---

१—नात्र मांसलक्षणानुपपत्तिरुच्यतेऽग्रे यवादि व्यावृत्तलक्षणस्यस्वयमेववक्ष्यमानत्वा त्किंतु शास्त्र प्रमाणकानां शास्त्रतो भक्ष्य निश्चयोमां सादेरभक्ष्यत्वा पादनंवार्यते इतिध्येयम्

यवसाधारण्यौद्वादिककर्ममात्रस्याशनादेश्च मुन्यन्नत्वेनाभि
मतानामपिदुष्टत्वापत्तौकर्ममात्राविलोपइष्टापत्तावनिष्टत्वेव्य
भिचारः वृक्षादीनामपि प्राणधारणस्य भग्नक्षतसंरोहणादि
नाऽनुमाना द्गुरुंत्तुंकृत्यहुं कृत्यविप्रंनिर्जित्यवादतःश्मशा
नेजायते वृक्षःकङ्कगृध्रोपसेविते इत्यादि स्मृत्याजीव
संवन्धानुमानात् किञ्चतदनन्तर प्रतिपत्तौरंहतिः संपरिष्व
क्तस्येति ३।१।१। वैयासक सूत्रेणजीवस्य प्राणपञ्चतन्मात्र
ज्ञान कर्मेन्द्रिय संपरिष्वक्तस्यो त्क्रान्तिकथनेन तद्यइहर
मणीयचरणास्ते रमणीयां योनि मापद्येरन् तद्यइहकपूयच
रणास्ते कपूयांयोनिमाप द्येरन् इतिछान्दोग्य श्रुत्यावृक्षादि
कपूययोनिष्व भिमानि जीव प्रवेशाभ्युपगमात् संत्ययोनि
जा इति वैशेषिक सूत्रेण ४।१।१०। तद्व्याख्यानभूत पृथिवी
निरूपण प्रकरणस्थ क्षुद्रजन्तूनांयात नेत्यादि-१ गौत्तम
कृतभाष्येणचकुयो निरूपाणां वृक्षादीनां स्थावर शब्देन
रूढिमापन्नानां शरीरत्वाभिधानात्पञ्चम्यामाहुतावापःपुरुष
वचसोभवन्ती तिप्रकरणे छान्दोग्ये ५।१०। तस्मिन्यावत्सं

---

१—उद्भिज्जस्य विषयेगणनं स्वोक्त त्रिविधशरीरभिन्नायो निजश
रीरत्वात्

पातमुषित्वाऽथैतमध्वानंपुन र्निवर्तन्ते यथैतमाकाश माका
शाद्वायुंवायुर्भूत्वाधू मोभवाति धूमोभूत्वाऽभ्रंभवति ५ अ
भ्रंभूत्वामेघो भवति मेघोभूत्वा प्रवर्षति तइहब्री हियवा
ओषाधिवनस्पतय स्तिलमाषा जायन्तेवैखलु इत्यादि ६
जीवस्थावरोहेमेघजल तद्विकार वृक्षपत्र पुष्प फलान्नादि
निरूढिमत्स्वस्फुटम भिधःनेनवृक्षादौतदाभिमानिताद्भिभो
भयाविधजीव प्रवेशस्वीकारात् तेषामपिप्राण्यवयवत्वेनमांस
त्वस्यदुरपन्हवत्वात् रसरक्तादिक्रमेणरक्त जनितत्वेच न्मां
सत्वंतदापिभुक्तस्य जलादे रसादिक्रमेण जायमानत्वसत्वा
त्फलान्नादि निरूढिमत्साधारण्यं रक्तस्यापिदोष प्रयोजक
त्वे भुक्ताहार पाक क्रमेण रसजनितस्य रक्तत्वे दुग्ध सा
धारण्ये दुग्धपान तद्विशिष्ट क्रिया दौगोवध दोषापादक
त्व मनिष्टत्वेहेतौ व्यभिचारदोषः पायसादेर्मांसत्वस्य स्फु
टस्वीकारापत्ते स्तद्धटित कर्माणि भवदाभिमत वाममार्गी
यत्वापातोऽनभिमतत्वे व्यभिचारो हेतोरतएव वृथा कृसर
संयावंपायसा पूपमेवच अनुपाकृत मांसानि देवान्नानिह
वींषिच ५।१७।इतिमनुनः पायस मांस गोधूमादि वि
कार भूतसंयावादेर देवसात्कृतत्वे सममभक्ष्यत्वमुक्तं यूप

ग्रावस्तुतौचेतनत्वेनोपदेशो पूर्वोक्तश्रुतौचकीर्त्यमानत्वेनाव
श्यंस्थावरत्वेनाभिमतेषुजीवत्वंमनुनापिअन्तःसंज्ञाभवन्त्ये
तेसुखदुःखसमन्विताः १। ४। इत्युक्तंस्फुटंजीवत्वं प्राण्य
वयवत्व रूपमभिमतंचेन्मांसत्वं तथाचदोषतदभाव प्रयोज
कमांसत्वं मुन्यन्नत्वेन भवदाभिमता साधारण वाचादुःख
संकीर्त्तनशालि प्राण्यवयवत्वेनोपलक्षित वृत्तिजाति विशे
षस्यतत्वस्यैववामांसत्वेन दोषप्रयोजकत्वसाधकमत्व तादृ
शनिरूढि विशेष मांसस्यैव भक्षण द्वारा दोष प्रयोजकत्व
मितिचेन्न स्मार्त्तस्य दोषस्यवृथे त्यादिनोभयसाधारण्यात्
स्मृतौमांसादेरपि भक्ष्यत्वोक्तेश्च वाक् शब्दस्यध्वनिवर्णान्य
तरात्मक शब्दस्य वागिन्द्रिय व्यापार विशेषस्य रंहतिः
संपरिष्वक्तस्ये त्यादिना जीवावेश बोधक छान्दोग्य श्रुत्या
चवृक्षादावपि सत्वात् स्फुटाक्षर घटित लक्षणस्याजादि
मांसस्साधारण्याच्चैवं षोडशहेतुखण्डने वेदानुकूलत्वा
दितिहेतौ विरुद्धत्वंचेदननुकूलत्वंतच्चत त्प्रातिषिद्धार्थ वि
धायकत्व मेवातिषष्ठहेत्वविशेषात्तत्खण्डनेनैवखण्डयिष्यते
प्रत्यक्षतोऽनुपलभ्यमान मूलवेदकत्व मितिचेत्सं ध्यादिवि
नियोगविधि बोधक स्मृति साधारण्येन व्यभिचरितोहेतुः

अनुमित वेदमूलकत्वा भावश्च संध्यादीतिकर्त्तब्यता कलाप वत्स्वरूपासिद्धः लैङ्गिक मूलवेदार्थानुवाद विनियोगस्य साक्षाररायेन वेदानुकूलत्वस्य रुद्राष्टाध्यायी विनियोजक मेरुतन्त्र वृत्तितया भागासिद्धोहेतुर्मधुमांसादि घटित वैदिकलैङ्गिक विनियोगानुवादत्वस्य सकलतन्त्र ग्रन्थेषु पद्धति प्रकरणेसत्वेनतद भावःस्वरूपासिद्धोहेतुः चतुर्थस्तुस्वरूपा सिद्धःमृतशब्दस्यमृत जीवपरत्वेतदुपास नायाश्चतुः षष्टि तन्त्र्याम निरूपणीयत्वा दीशोपासनायाः सर्वत्रतन्त्रप्रति पाद्यत्वात्तस्यैव भक्तानुग्रह चिकीर्षया प्रतिपाद्यमान बहु विग्रहत्वाच्छरीर प्राणवियोगस्य चरमस्यमरणत्वेनावतार कल्पनाविराट् पुरुषान्तःपातिमरणेन वैदिकदेवमात्र साधारणत्वेन व्यभिचारापत्तेः। परन्तु श्रुतिसामान्य मात्र मिति १।१।३१ जै. सूत्रेणहाविर्भिरेकेस्वरितःसचन्ते सुन्वन्तएके सवनेषुसोमान् शचीर्मदन्ते उतदक्षिणाभिर्नोज्जिह्मायन्त्यो नरकंपताम इत्यादि मन्त्रैरहूगणाशिव्याद्या इन्द्रत्वमवाप्ता इत्यादि पुराणैः १।३।२६-२७-इत्यादिनावैयासक सूत्रादि नाचदेवता धिकरण स्थेन द्वौवैदेवा देवदेवा मनुष्यदेवाश्चे त्यादि शतपथादिभिस्त्वदुक्तहेतोर्वेदसाधारण्येनव्यभिचार

त्यानिवार्यत्वाच्च सर्वजाति शुद्धकरत्वस्या प्रमाण्य प्रयोजक
त्वा भावात् सर्वजाति मनुज संपादित कर्मविधायकत्वपर्य
वसन्नस्य तस्यहेतो र्यथेमांवाचंकल्याणी मावदानिजनेभ्यः
ब्रह्मराजन्याभ्यां वैश्याय शूद्राय चार्याय स्वायचारणायचे
तेदक्षिणाप्रकरणोक्त २६।२मन्त्रेण कर्मकुरत्वे नेडाभक्षणाय
हव्या अध्वर्यवउपहूता उपहूता मनुष्या इत्यादि शतपथे
यागादौ सर्वजातिघटितत्वाद्व्यभिचारः स्त्रीशूद्र द्विजबन्धू
नांत्रयीन श्रुतिगोचरे त्यादि भागवता दिवाक्ये नाचाण्ड
लभक्ति सूत्रैर्नाविकरामभक्ता व्याख्यानैश्च भजनमन्त्रोप
देशा देस्तदुद्भावितत्तप आसादितदिव्यवपुषाजनेन व्यव
हारस्य पुराणादिसम्मतत्वेन भक्तिकाण्डीयसर्व शुद्धिकरत्व
य धर्मशास्त्रेसत्वेन व्याभिचरितः पञ्चमोहेतुः श्रुतिस्मृत्य
नुवादकत्व मुपाधिश्चात्रबोध्यः । षष्ठ वेदविरुद्धत्वनामवे
दान नुकूलत्वं वेदवाक्य विरोधि वाक्यार्थ बोधजनकत्वंतच्च
असंभवति कचिदपि वेदतन्त्रंनप्रमाणंतदुक्तहिंसावान प्रमा
णमित्यादिनयेनतद्वि रुद्धघटि तार्थकत्वेना प्रामाण्यंस्या
त्किंचाहिंसात्वं पापजनकत्वेन विधि बोधितत्वेसति प्राण
वियोगानुकूलःशारीरोव्यापारस्तभोतिचे न्नतन्त्रोक्ताहिंसायाः

कापिपापजनकत्वेनाविध्यर्थ लिङ्लव्यादि घटितविधि बोधि
तत्वम् प्रत्युताग्नि षोमीयं पशुमालभेते त्यादि वस्स्वर्गाद्य
र्थत्वेनाविधिविहितत्वमेवनपापजनकत्वेननचमाहिंस्यादिति
श्रुतिस्तन्त्रेच स्मृतिरिति स्मृत्या श्रुत्यर्थ संकोचा संभवन
शिष्टा कोपेऽविरुद्ध मिति १।३।५। जैमिन्युक्तः स्मार्त्ताहिंसा
तिरिक्तत्वे नसंकोचासंभव इतिनाग्निषोमीय पशु तुल्यत
तिशङ्का तत्राहिवैधाति रिक्तत्वं यागाति रिक्तत्वं वासंकोच्य
तुल्यतया तान्त्रिक यागेऽपिनिषेधासं-१भवात् अतएवयज

---

१—यद्यपिलोके व्यवायामिषमद्य सेवेति भागवतवाक्यानुरोधेन
परिसंख्या विधित्वं मिताक्षराया अ १ । ८१ मुक्तंतथा महाभाष्ये
भक्ष्यनियमेनाभक्ष्य प्रतिषेध इति नियम विधित्व मुक्तमलएवविक
ल्प इति भट्टोजिदीक्षितःकोस्तु भेउक्तवान् नागेशस्तु जैमिनि
नापरिसख्या विधिभिदायोक्तापतजंलिनातदनुक्तेनियम शब्देन
परिसंख्याया अपिविरोध परिहाराय निषेध मुख प्रवृत्तिरूपत्वेन
गृहणांलघुमञ्जूषायांविवरणेचोक्तवान्तथाप्येवंसतिभक्ष्यमात्रस्यान्ना
देरपिजीवत्वेन माहिंस्यादि त्यस्य विषयप्राप्तौ भोजनमात्र विलो
पे अतमहिंसादेश्च तद्विषयत्वे व्यवहार मात्रासिद्धेरेषा व्यवस्था
युक्ता भागवतग्रन्थस्तु ब्रह्मचर्यसंन्यास पुरस्क्रियादौ मुन्न्यन्नादि
संकलित भक्ष्यप्रशंसयाव्याख्यातवानित्यर्थ वादत्वेननस्वार्थे प्रमाण
किन्तु प्रशंसा मात्रार्थक मेवभाष्यानुरोधेननियमकल्पनैवउयायसी
तुल्यताज्ञान जनितराग प्राप्त देवसात्कृतभक्षयाभक्षणस्या पिज्ञा
निजनितराग प्राप्तत्वा विशेषण पक्षेऽप्राप्त विधायकत्वेन विधि
मुखेन प्रवृत्या जैमिन्युक्त नियम विधिशब्दार्थकस्यैवात्र महाभा
ष्ये नियम शब्दस्यलाभात् वस्तु विचारार्थक महर्षिव्यवस्थाया
[illegible]

देशा वच्छिन्न प्रतियोगिता काभावज्ञानस्य तद्धर्मावच्छिन्न प्रकारता कबुद्धिंप्रति प्रतिबन्धकत्वात् नहिकालिका व्याप्य बृत्ति विषयकज्ञानस्य तदभाव विरोधित्वं दृष्टचरंमूलेकपि संयोगाभाव ज्ञानसत्वेऽपि संयोगवत्ता बुद्धेर्वृक्षउदयात् पूर्व कालिकवन्ह्य भावज्ञानेपि तदातिरिक्त वर्त्तमानादि पर्वतवि शेष्यक वन्हिज्ञानस्योदयाच्च कालदेशावच्छिन्ना व्याप्यवृत्ति भावाभावयो र्विराधा भावस्यैवयुक्तत्वात् यद्यपिऽयवस्थातः पूर्वश्रुतेः साक्षात्स्मृति प्रावाल्येनमन्त्रालिङ्गा पेक्षयातदनु मिति बाधकत्वेनच प्रावल्येन नकाल विषयत्व मितिस्यात्त थापिश्रुतेःस्मृत्यनु मितिवाधकत्वं नसंभवतिप्रकृते एकस्या नर्थकत्वे विपरीतंवलावल मितिन्यायेन मन्त्रालिङ्गस्यानर्थ कत्वेतस्यैवबलवत्वेन व्यवस्था स्मृत्या प्रमृष्टकाल ज्ञानस्य श्रौतस्य कालाविषयत्वेनाव धारणात् प्रमुष्टतत्ताक स्मरणा देरिव प्रमुष्ट कल्यतिरिक्त कालाविषयक गोमेध वैदिक या- गीयहिंसा विषयकर्त्तव्यताज्ञानस्य स्मृतिमन्त्र लिङ्गादिजा नुमितौसाक्षा देदभिन्न विषयकत्वेना प्रतिवन्धक त्वात्१

---

१—स्य ३.ये. बलाबल चिन्तायांरूढयादिनैरर्थक्येनाङ्गीनादङ्गोदशो पसत्वाङ्गत्वं नात्रयोग श्रुतेर्वाक्या पेक्षयाबलवत्वं तथाऽस्य १ मे १८माधिकरणब्राह्मणविध्यक्षयास्मारकस्य मन्त्रस्यनिर्बलत्वेऽपिब्राह्म णक्रमापेक्षया मन्त्रपाठ प्राबल्येनाग्नेयाग्नीषोमयो र्ब्राह्मणविपरीत क्रमाङ्गोकार

प्राबल्याधिकरणस्यच विरोधे उभय समुच्चयासंभवे विकल्पस्याष्ट दोषग्रस्तत्वेन स्वीकर्त्तुम शक्यतया श्रुतेर्मन्त्र द्वयस्यच प्रामाण्येन कल्यतिरिक्त युगवर्तीविधिः विधि निषेधश्च कलिविषय इति व्यवस्थित मन्त्रलिङ्गजन्यानुमितौसाक्षाच्छ्रुते ब्राह्मणीयायाःसामान्यविषय हिंसायाःनकथमपिबाधकत्वम् प्रत्युतविशेषानुमितिबाध्यत्वमेव अवच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन बाधज्ञानस्य प्रतिबन्धकत्वेऽपि कलि विशेषा वच्छिन्नसाध्यकानुमितौ कल्यतिरिक्तकाला वच्छिन्नसाध्याभाव प्रकारक बाधरूपस्य कल्यति रिक्तकाला वच्छिन्नगोमेध वैदिक विधिपूर्वक यागीयत्व विशिष्ट हिंसाज्ञानस्य वैदिकत्व प्रकारकस्य कल्यतिरिक्तकाला वच्छिन्न यागीय हिंसा विशेष्यकस्यवातदुन्नायकज्ञानस्यनबाधकत्वम् विभिन्नकाला वच्छिन्न विषयकत्वे नग्राह्या भावानवगाहित्वात् तत्कालानवच्छिन्नतादृश ब्राह्मण वाक्यावगतकर्त्तव्यता गोहिंसा विषयकेतिज्ञानस्यचमन्त्राद्यनुमितानिषेधेन माहिंस्यादि तिसाक्षान्निषेधेन चविरोधात्कलि विषयकव्यवस्था स्मृत्याऽवगत व्यवस्था विषयकज्ञानेना प्रामाण्य ग्रहादगृहीता प्रामाण्यक तद्धर्मकाल

ष्टदोषग्रस्तत्वेन समुच्चस्य भावा भाव विरोधेना संभवादव इयंयुगभेदेन व्यवस्था प्राप्तावश्वालम्भ मिति पराशरोदि तया कलियुग विषय निषेधव्यवस्थयाबाधः कलौव्यवसी यते पाक्षिकाभावस्य विकल्पेऽपि प्राप्ततथातद नुवादि युग व्यवस्थाया वेदानुकूलत्वासिद्धेः मन्त्र ब्राह्मणयो र्विरोधे मन्त्रानुकूल व्यवस्थाया एवमन्त्र प्राबल्याधिकरणे निर्णी तत्वेन मन्त्रानुकूल युगव्यवस्थायाः साक्षाद्विधि बाधेऽपि व्यवधाने बाध्यत्व मितिन्यायमूलक श्रुतिस्मृति विरोधे श्रुतिबलीय स्त्वमितिन्याय विषया भावेन प्रकृते गवाल म्भादि विधेरप्राबाल्यात् अनुमितार्थस्यसाक्षाच्छ्रु तिबाधे ऽनुमित्य भाव इतिमूल वेदा भावेन मूलप्रामाण्योच्छेदेनैव स्मृतेर प्रमाण्य चिन्तनेन स्वार्थापर्यवसायित्व बोधनात् प्रकृतेऽनुमापक मन्त्रस्य स्मृतेश्च ब्रह्मणादि प्राबल्यम् यद्य पि विधित्वेन ब्राह्मणस्यैव मन्त्रात् प्राबल्यं मन्त्रानु मितार्थ श्चलैङ्गिकोऽपि विरोधिश्रुतिप्राबल्येनबाध विषयः श्रुतिलि ङ्गवाक्यप्रकरण स्थानसमाख्याना मिति जैः ३।३।२।अधिक रण सूत्रात् तथापि मन्त्र प्राब १ ल्याधिकरणस्य ७ श्रुति

१—यद्यपत्रमन्त्र विशेषोदित कृमस्यप्राबल्यं तथापितेनफलतोमन्त्र स्य प्राबल्यमवैधे प्रायोलभ्य तेकृमस्याप्यवैधत्वात्

देवपूजेतिपाणिन्यनुशासनंतद्याजिःपूजायामितरेषांनैवमिति शाण्डिल्य४८सूत्रंचसंगच्छतेअतएवस्मार्त्तेषु पौराणिक धर्म शास्त्रीय देवतोद्देश्य कबलिदानेषु श्राद्धीय मांसभोजनादौ भक्ष्यप्रकरणोक्त मांसादने देवसात्कृतेपायसादिवन्नहिंसा त्वंनवा विरोधः एतेन वैदिक विधि विषयातिरिक्त हिंसा याःपापजनकत्वेनमा हिंस्यादिति विषयत्व मितिशङ्का परा स्ता अतएव चैतरेय ब्राह्मणे सोमेराजन्यागते अजंवोक्षाणं वेतिग्रन्थेन प्राप्तगोवधस्यापि अश्वालम्भंगवालम्भ मिति स्मार्त्त निषेधेन साक्षाद्विहितत्वा द्बाधः आरात्ते गोघ्नेउत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मेते अस्तु १।९।९। इत्यृङ्म न्त्रोदितगोहिंसकवध्यत्वानु मितगोहिंसा निष्ठपापजनकत्वे नगवालम्भस्य साक्षाद्विधेयत्वेन पूर्ववाक्यानु मितगोहिंसा विधेश्च मन्त्र ब्राह्मणयोर्गवालम्भीय मन्त्रकाण्डस्या ध्वर्य वस्यच अश्विनाह विरितितिस्रो वपानांयाज्यानु वाक्या का. १९।६ सूत्रानुसारं गोभि० २०। ६६ तामिन्द्रमि ६८त्यादेर्यः विरोधेपरस्पर बाधे विकल्प समुच्चयादिप्रसक्तौविकल्पस्या

१—पक्षेऽप्राप्तस्य कल्पना प्राप्तस्य पक्षेबाधस्त द्विरहेतत्प्रत्यनीक पदार्थ कल्पना प्राप्त प्रत्यनीक बाधःतद्विपरीत पक्षेपुनरस्यैवचतु ष्टयस्य कल्पनेत्यष्टौ दोषाः

प्रमोषेऽपिकालस्यवस्तुतः कलिभिन्नकाल वृतिवस्तु विषय
कत्वेनविभिन्न विषयता संभवात् शाखाद्यवच्छेदक देश
प्रमोषेपि शाखावृत्तिकापिसंयोगज्ञानंनमूले कपिसंयोगाभाव
ज्ञान विरोधि वस्तुतोभिन्न देशत्वातृतेन देशाद्यवच्छिन्न
वृत्तिकतदभाव ज्ञानतज्ज्ञान योरेवविरोधाव धारणात्अव्या
प्यवृत्तित्वा ज्ञानकालेपि वस्तुतो विभिन्न देशकालेचदेश
कालपरामर्श मन्तरास्वाभाव ज्ञानस्यानुभव सिद्धत्वमेवहि
दृष्टचरविचार मिति प्रकृतेछागादि स्मार्त्त हिंसाया यागीय
त्वेनसामान्य तस्तन्त्रादि साधारणस्य हननस्य बाधाभा-
वाद्वैदिकत्वानु मितावग्निषोमीयतुल्यत्वमेवेतिदिक्नचादि
देनरेत आदिहोमस्यतथात्वंशङ्क्यम्अजावपादि होमतुल्य
त्वात् अश्वमेधा दौगणानांत्वे त्यादि मन्त्रेषुलिङ्ग हस्तग्र
हस्यहृदयेऽवद्यतिगुदेइत्यादिना हृदयगुदाद्यवदानस्यगोप
वादौ,मेध्याये १० मतः पात्नीवत प्रकरणे अथाहाग्नीत्पा
त्नीवतस्ययजतिवृषावाअग्नीध्रोषापत्नीमिथुन मेवैतत्प्रजन
नंक्रियते सजुहोत्यग्ना इत्यादि कात्यायन श्रौतसूत्रेण ११।६

—वर्षवर्षीलो रेतस्रोऽग्नौ दृविष्

विनियुक्तानांग्रह होमादि मन्त्राणांरेतोधस्त्व लिङ्गनाग्नीत्प
स्युपहासादेः स्फुटंप्रतीयमानत्वात्नेष्टापत्नी तामुद्गात्रा
संख्याप यति प्रजापति र्बृषेतिका ११।७सूत्रेण स्फुटमुद्गा
तुर्वीर्यदातृत्व प्रशंसादिलाभात् ध्यातमात्रस्य प्रशंसा वि
चारमात्रस्योपहासादेर्वा विषयता कल्पेनन प्रकृतेऽपिरेतो
हवनादि ध्यानस्य तुल्यत्वात् वस्तुतस्तन्त्रोक्तस्यरेतो होमा
देर्यौगिक ब्रह्मरन्ध्राग्नि होमरूपवजरौली क्रियाविशेषरूप
त्वेग तन्त्रस्य बाधाभावात् प्रत्युताग्नि मूर्धादिवःक कुत्प
तिः पृथिव्या अयम् अपांरेतां सिजिन्वाति इति मन्त्रेणसो
मेऽग्निस्तुतौ बिनियुक्तेनरेतः प्रीणनस्य श्रौतत्व मेवाथाति
नतान्त्रिकत्वम् अग्नेजलकारणतया सामान्यलक्षण याऽज
हद्लक्षणया कारणतार्थकत्वेन कथंचिद्व्याख्यानेऽपिश्रुत
शक्त्याम दुक्तार्थस्यैव बोधनंयागाति रिक्तत्वस्य दोषावा
त्वे तन्त्रसाधारण्यम् अथापिकथं चिल्लक्ष्यार्थ विशेषएवत
त्पर्य मितिचत्तन्त्रस्यापि मदुक्तार्थ एवतात्पर्य मिति वाध्यम्
अधिकं षोडशहेतु विचारें ऽवसेयंनवमे महापातकित्वं सुर
प×त्वाद्यन्यतमत्वं किञ्चतत्सुरात्वं मद्यमात्रत्वं मदशक्ति
विशिष्टत्वं वेतिचेन्न सुरातमलमन्नानां पाप्माचमल मूच्यते

११।९४ मनुना सुराशब्दस्य पिष्टादि निर्मितगौडामाध्वी पैष्ट्यन्यतमवृत्तिनिर्धारणात्तत्रापिपैष्ट्यामेवशक्त्या मुख्यःप्रयोगःगौडीमाध्व्योश्चयथैवैकातथासर्वेत्यग्रिमश्लोकेन तत्सा दृश्येनगौणः प्रयोगइत्युक्तं भवति यथादिशब्दो पादाना देतनान्यतमशक्तिः परास्ता मद्यशब्द स्तुफलरस विशेषपान संद्राक्षमाधूकं खार्जूरंता लैमक्षवस् मधूत्थं सैर मारिष्टं मैरेयं नारिकेरजं समाना निवि जानीयान्मद्यान्ये कादशवतु इतिपुलस्त्योक्तैरे कादश विध वृक्षफलादिरस विशेषे शक्तेस्तत्पानस्य ब्राह्मणाति रिक्तेन निषेधोमहापात कित्वं दूरपराहतं माधूक मैक्षवंसैरंता लंखार्जूर पान संमधूत्थं चैवमाध्वीकं मैरयंनारिके रजम् अमेध्यानिद शैतानि मद्यानि ब्राह्मण स्यतु इति वृहद्विष्णु वाक्येन प्राय श्चित्ताध्यायीय प्रायश्चित्त प्रकरणस्थ याज्ञवल्क्य २५३स्यश्लोके नामितोक्षरोद्धृतनाऽरिष्टातिरिक्त दशाविधमद्यस्यब्राह्मणस्यै वनिषेधप्राप्ति रासवस्यतु ननिषेध विधि विषयतासच्चभूनि खातवस्त्र निष्पूतौषधि विशेषे ( सिर्केत्यादि भाषा प्रसिद्धे) सादृश्येचन्द्र न्यान्तररूढः यक्षरक्षः पिशाचान्नंमद्य मांसं सुरासव मितिवाक्ये भेदनो पात्तः अनेनचनिन्दा मात्रं

गम्यते पाने मदादिनाऽधिकतरम देऽस्तव्यस्तकार्य संभवात् निषेधस्तुनत द्विधानालाभात् निन्दामात्रस्य राक्षसीयत्वा दिकीर्त्तनस्य निषेधकत्वाभावात् नचतद्ब्राह्मणेन नात्तव्यंदे वानामश्नता हविरित्युत्तरार्द्धेन यागेतरसोमादी तरमद्या दि निषेध विधित्वं शङ्क्यम् प्रथमाध्याय २ पादे ३ याधिक रणी योर्जोवरुध्यै इति श्रौतवाक्य व्यवस्थानुरोधेन यक्षादि पेयत्ववदेवहविरशितृ विप्राग्राह्यत्वस्यापि निन्दार्थ वादता याब्रह्मचर्यपुरश्चर्या संन्यसादि मतस्तदभाव प्रशंसै लाभात् नचतत्रौदुम्बरता विधानव त्प्राकृतेऽनशनंविधे यमितरत्तत्पु ष्ट्यंर्थ निन्दा फलंकस्यादि तिशङ्क्यम् बृहद्विष्णु वाक्य नपूर्वोद्धृतेनैक वाक्यतयादश विधमद्यस्य तथा लाभेऽपि आरिष्टमद्यस्याविप्रपेयत्व लाभेनतद्विरोधापत्तेःअथेदंतस्या पिनिषेधविधायकमस्तु मिताक्षरा ग्रन्थश्चैतदना लोचनेना संगतएवेतितन्न ब्रह्मचारि मद्य निषेधस्ययाः ३३प्राप्तिपूर्व कत्वेनतद्वाधा संभवात्क्षत्रि यादिप्राप्तेरेवतेनाश्रम भेदाद्वि धानात् क्षत्रियादीनां मद्यस्याविधिनि निषेधादि विरहेणत द्विषयेराग प्राप्तिवत्तु शब्देनाव धारणार्थेन दशैव ब्राह्मण स्येत्यर्थ वोधनेन ब्रह्मणादेरप्याऽऽरिष्टस्य निषेधाभावेन राग

प्राप्तत्वेन मिताक्षरा ग्रन्थस्य दशविधमद्यपाने ब्राह्मणस्य निषेध इति ग्रन्थस्या संगते र्वक्तुमशक्यत्वात्तु शब्दोजात्य न्तर निषेधपर इतित्वातिस्थत्रीयोराजसूयोदेक्षःत्रिय मात्र साध्यत्व विचारे २।३।३ जै. सूत्रेराजपदस्य क्षत्रियपरत्वेन त्रिप्रादेरकरण लाभवदर्थापत्यातेनैव न्यायेनब्राह्मण शब्दो पादेनेनैवक्षात्रियादेः पेयत्व सिद्धौतदर्थकत्वेतु शब्दस्य वैय र्थ्यापत्तेस्तेन दशैवेत्यर्थेना प्राप्त मद्यस्य विप्रादि त्रिवर्ण सा धारण्येन ब्रह्मचारिणो निषेधा संगत्या तदतिरिक्तस्याऽरि ष्टादि पानस्य विप्रादेरपि लाभेमनूक्त मद्यनिन्दायाःफलार्थ वादत्व मेवानिषेध विधित्वंतुन कथञ्चित्संभवतीतिध्येयम् आसवस्यरागप्राप्तत्वेपि निन्दार्थ वादत्वेन निश्चितैत द्वाक्य ननकथमपि निषेध विधानम् अरिष्टस्य द्राक्षारिष्टा देनका पिदोषःनिषेध विधिनिन्दयोरेवालाभात्। अरिष्ट शब्दश्च चिकित्सा प्रसिद्धःओषधिबाष्य संपादितजलविशेषे(अर्केति, भाषा प्रसिद्धे शराब इतिव्यवहृते) शक्त एतस्यचयज्ञा ?शि ष्टाप्रातीषिद्धं नैवतद्दोषाय भवति नाभ्युदयायेति भाष्योक्त रीत्यानपान द्वारापुण्य पापादे जनकत्वं वैदिका दिक तान्त्रिक मन्त्रादिसंस्कृतस्यतु महापुण्यजनकत्वमित्यत्र कि

मधिकंवाच्यंम् तथाच यवब्रीह्याादिजातिरिक्त पानस्यैवन
महापातकत्वंक: पुनस्तन्त्रादिमन्त्र संस्कृत पानस्यतत्रान्त
र्भावंकर्त्तुं मीष्टेतत्रतु सुरापानेऽपि निषेध विधि विभिन्न वि
षयत्वेननमहापात कान्तर्भाव: सौत्रामणी कुलाचारादन्य
त्रन सुरांपिबेदि त्सौत्रा मणी कुलाचारे ब्राह्मणश्च सुरांपि
बेदिति कुलार्णवम् श्यामारहस्यादौस्फुटम भिधानेन सौत्रा
मणिसोमादि यागादेर्वेद विहितस्य लाभेनयागीय पानाति
रिक्तत्व निवेशस्या वश्यकत्वादन्यथा सुरानिषेध विधेर्मन्त्र
ब्राह्मणात्मक वेदक्वाप्य नुपलम्भेन सोमेनयजेते त्यादि वि
धिबोधितत्वेन स्मृतेरपि श्रुत्यनुमापकत्वा संभवे सुरापस्य
महापातकिषुगणनपरत्वप्रायश्चितादि परस्मृतेर्वेद विरुद्ध
त्वेना प्रामाण्य प्रसङ्गात् ॥ नचासिद्धानां तन्त्रे सार्वदिकंपा
नमुक्तं ब्राह्मणानां सदापेयेति कुलार्णव ४ पटल श्यामार
हस्यादा वघोराणाञ्च स्वछन्दानांचस्वछन्द तन्त्रादा विति
शङ्क्यम् तेषां भूमिका विशेषमन्त्र सामर्थ्य प्रभावेणचा
पेक्षाऽभावेन नित्यमुक्तत्वेन शृण्वन्नपिनशृणोति इत्यादि
श्रुत्युक्त जीवन्मुक्ततादृशावस्थाविशेषस्थत्वेन स्तुति निन्दा
भयादिनाऽप्रवर्त्तमानानां गृहस्थिनां पूर्वोक्त विशेषव्यवस्था

करणात् निर्भयाणामपि अवस्था विशेषा प्रकटनाय रूपा
न्तर मासादितानां भीतानामप्य भीतानांतत्वानपा यात्
इतितादृश स्वच्छन्दाति रिक्तापेक्षतद्व्यवस्थायाः स्वीकारे
णनसिद्धान्त भंवेणहानि रित्यनवद्यमधि कंषोड शहेतौ
निरूपयिष्यते अदेवोदेश्यक विधि वाक्य घटितत्वं चोपाधि
रत्रेति व्याप्यत्वा सिद्धिश्चम हापातकि संसर्गि घटितहेतु
कानुमाने इति बोध्यम् शिष्टापरिगृहीत त्वादिति स्वरूपा
सिद्धोहेतुः कुण्डयोगषट्चक्र भेदन पुरश्चर्या प्रकारविशेषा
णां चण्ड्यादि विधि विशेषाणां नारायण सहस्रनाम जप
मन्त्र ग्रहणादि प्रकाराणां प्रायो रुद्रायामल देवी १रहस्या
दि तन्त्र प्रसिद्धनां गृहीतत्वेन शङ्कराचार्यादि शिष्टत मानां
सर्वस नातनश्रौतस्मार्त्त पद्धति गृहीतत्वात् किंचेदंशिष्टत्वं
वैदिकत्व व्याप्यंनवानोचेत्तद परिग्रहस्यन धर्मेऽप्रामाण्य
साधकत्वे प्रयोजकत्वं वेदादौतत्सत्वेन व्यभिचारो विरो
धश्च हेत्वा भासोवैदिकानाम् अस्तिचेच्छङ्करादिभिस्त
द्रहस्यो पपादितत्वात् स्वरूपा सिद्धो हेतुःअथशिष्टेतरग्राह्य

---

१-देवीरहस्ये मि१६पटले पंचाङ्गसत्वात्स्फुटंपसद्यादेस्तत्रसत्वात्

स्वंतदर्थ इतिचेत्पुराणाद्यन्त र्भावेण व्यभिचार इतिकेचि
दाहुरेकंदक्षिणंवामंचान्यत् तत्रवाम प्रकार विधायक
तन्त्रत्वावच्छेदना प्रामाण्य साध्यंदक्षिणत्वावच्छेदेनतु प्र
माण्य स्वीकारो नारद पञ्चरात्रादि भक्ति काण्डस्य शि
परिगृहीतत्वात् तन्त्रत्वावच्छेदनानु मितौ भागासिद्धिरे
पिसामाना धिकरण्येना नु मितौना सिद्धि रितितन्न वा
स्वलक्षण प्रस्तावे तृतीयहेतूक्त वामत्व विशिष्ट दक्षिणा
भिन्नस्यपक्षत्वे आश्रया सिद्धोहेतुःपूर्वोक्तरुद्रयामलाद्युक्त
योगादि मार्गस्य शाङ्कर परिगृहीतत्वे नोक्तत्वेन स्वरू
सिद्धेश्च मद्यादि घटित विधित्व स्यवैदिकवामगृह्य सु
दक्षिणविधि साधारण्यस्यपराप्रदर्शितत्वेन तन्त्रेषुक्वाचि
मकार पञ्चकवत्वादि लक्षणस्य पुरश्चर्यादि गृहस्थ ब्र
चर्यादिकाश्रम भेदसमय भेदेनोक्त धर्मप्रशंसार्थ परि भा
भेदमात्रत्वेन वस्तुतो वामत्व दक्षिणत्व योर्भेदाभावेन
न्निवेशे तन्त्रेषु पक्ष्यता वच्छेदका सिद्धिरेवनच ब्रह्मच
पुरश्चर्या कल्पानांयावज्जीव मनुष्ठातॄणां दक्षिणत्व
दितरेषांचवामत्व मितिवाच्यम् तथैवतद्बोधक तन्त्राणा
त्ति शङ्क्यम् तथासति गृहस्थाश्रमाद्य मावप्रसङ्ग

गृहस्थादिधर्माणामावश्यकत्वेनदक्षिणवामत्व योरुभयोरेवसा मानाधिकरण्येनावश्यकत्वात् नैष्ठिकयत्यादि कल्पेन वैय- धिकरण्ये सत्यपितद प्रामाण्यस्य वक्तुमशक्यत्वेनआश्रम द्वयवतादेक्षिणवामत्वेनैकाश्रमवतः केवलत्वेनच दक्षिण क्रमादि भेदस्य लक्षणतः प्रमाणवहिष्कार प्रयोजकस्यव- क्तुमशक्यत्वेना प्रामाण्यानु मितिपक्षता वच्छेदक कोटि निविष्टभेद प्रतियोगिवामत्वा सिद्धापक्षा प्रासिद्धिःप्रासि- द्धोररी कारंवाधश्चगृहस्थधर्म वोधकशास्त्रंधर्मेऽप्रमाणमि तिवदतःसर्ववैदिकतान्त्रिक धार्मिक ग्रन्थविरोधा पत्याऽऽग मविरोधस्यदुष्परि हरत्वाच्च प्रत्युत कलावारूढपतित्वादि संभावनया संन्यासंपल पैतृक मित्यादि पराशरीत्याकलौ संन्यास संकोचस्यापादयितुं शक्यत्वेनै काश्रम्येएव वाध कसंभवनाएषाच स्मृतिरपि यदहरेव विदरजेत्तदहरेव प्रव्र जेदिति श्रुतेर्निर्वलाऽनयाश्रु तेःप्रसृष्टकाल विषयकत्व प्रतीत्या विभिन्न विषयत्वेन वाधायोगात् विपरीतबला बलन्या याच्चवस्तुतः संन्यासस्य नात्यन्त निषेधः आतुर व्यवस्थायामारूढपतित्वादि संभावना भावेनतादृशाव स्था विशेषार्थत्वेन चरितार्थता हेतुदर्शनाच्चेति जै.अ.३।३४।

औदुम्बरी सर्ववेष्टनस्य स्वार्थेऽप्रामाण्यवत्कलिमात्र निषेध
स्थनास्मिन्सन्यासांशेतात्पर्य मितिध्येयम् अतएवनारद
पञ्चरात्राद्यन्यतमत्वरूप दक्षिणत्व माश्रित्यतद्भिन्नंच
अस्वंतन्त्रत्व सामाना धिकरण्येननानु मितिः पूर्वोक्त रीत्या
वच्छेद कावच्छेदेन बाधोत्थापनात्, प्रसिद्धश्च स्मृति भि
न्नत्व समानाधिकरणवेद भिन्नत्वंच भवदभिमत हेतोःपक्ष
ऽभ्युपगमे उपाधिः स्मृतित्वस्य पुरातनऋपुराणादावुपप
दितत्वेन शाक्यादि ग्रन्थे साध्य व्यापकत्वात् पक्षएवसा
ना व्यापकत्वस्य भवतैवोपपादितत्वाच्च स्वंपक्षतावच्छेद
दक्षिणातिरिक्तत्वंच सन्दिग्धोपाधिः आगमत्व सामान
धिकरण्येनानु मितौतु पूर्वएवोपाधिः किञ्चनहिनारद पञ्च
रात्रादेरेव वैष्णावानां प्रामाण्यं तस्यैववा दक्षिणत्वं प्राम
ण्य प्रयोजक शिष्ट परिग्रहश्चेति नियमः विष्णुभक्तत्व
नारपञ्चरात्र मात्रस्वीकर्तृत्व नियामक हेतोरभावात
एकदेशित्वे शास्त्रवाह्यत्वेन। वैष्णवत्वस्यै वोपपादित्व
स्मृत्यनवकाशेति २।१।१। सूत्रे विरोधेनस्मृती मांसवाद
वेषां प्रामाण्यं व्यवस्थयेति स्फुटमभि हितोयमर्थो म
भाष्ये वैष्णव मानिनां प्रमाण ग्रन्थे तत्राहरुद्रादीन

प्राण्य प्रसङ्गोऽभिहश्च सर्वज्ञत्वात्तेषां तत्प्रामाण्यवाकुतो
विष्णु ग्रन्थ प्रामाण्यं प्रामाण्येवापरस्पर विरोधेकथं सर्व-
ज्ञत्वोपपत्तिरित्याशयेन सर्वज्ञारुद्रादयोऽसस्तेषांवचन विरो
धेऽप्रामाण्य मितिचेदितिशङ्का ग्रन्थमुक्त्वाऽथविष्णवादीना
मपिश्रुत्या सर्वज्ञत्व प्रति पादनाद्विष्णु स्मृती नामाधिक्य
मित्याशयेन अन्य स्मृतीनां विष्णवादीनां विष्णवादि भिन्नि
तरां सर्वज्ञैरे वक्तृतत्वाच्छ्रुते राधिक्यं सिद्धतीत्युक्त्वा
न्यूनाधिक्य भावेऽनवका शत्वतादवस्थ्येन रुद्रयामलदेवी
रहस्य विष्णु स्मृत्यादेः सममेव व्यवस्थया प्रामाण्य मि-
त्यर्थस्य भाष्यतो लाभः नचात्र क्रमो धिकारिभेदेन पूर्वो
त्तररूपोन्यूनाधिक भाव विशेष व्यवस्थापकः कश्चिद भी
प्सित इतिवाच्यम् सर्वज्ञशब्दस्योभयत्रदानेनन्यूनाधिकभा
वमनङ्गीकृत्यदा र्थ्यमात्रबोधनायाधिक्य शब्दोपादानस्यै-
वमुक्त्वा जात्यादीना मनुल्लेखा त्स्वयंरामानु जैः प्रथम
सूत्रेचरुद्रादीनां विष्णु वाचकत्वा भिधानेनतद्ग्रन्थ विरो-
धाच्चनाहितस्यैवरुद्रनाम्नउक्तत्त्यपेक्षयाविष्णुनाम्नस्तस्यैवो
क्तोन्यूना धिक भावः संभवति वस्तुतोना मलक्ष्यत्व मेव
यु केवाचकानां तु व्यक्तिभेदान्नैव भक्तानुग्रहायतद्ध्येयरूप

नां कदाचित्त त्ववसार नियत काले प्रादु र्भाव उपासकै
श्चैकदेवैकव्यक्ताव पिस्थान भेदेन व्यक्त्यान्तरेचमूर्त्याद
स्वाभेदरूप प्रतीकेन ध्यानादिनावोपासने पिलक्ष्य रूप
ब्राह्मणः सगुण मूर्त्ति तद्वाचक तत्प्रती काद्युपासनाय
व्यवसत्वेनं तत्सालोक्यादि भिरैश्वर्यादि लाभ इत्युरीका
स्यैवयुक्तत्वं साम्यंत्वेकस्यैवनाना नाम रूपाणां लक्ष्यस
मानाधिकरण्येन मूर्त्तिवैय धिकरणपेन चाश्रयादिलिध्येयस्य
अथवा तन्त्रादि साधारण्येन मन्त्रादिबत्वेना विरोधाःश्रम
भ्वभाष्यस्या भिप्रेतः ब्राह्मणेति ४। ४५ ।सूत्रे तन्त्रोक्त
युक्तेरिति वादा त्तन्त्र स्मृति साधारण्येनादरातिशयोमन्त्र
दीना मित्याशयस्यापि युक्तत्वात् १ शिष्टपरिगृ हीतम
योग्यत्वादि त्यष्टमोहेतुरत्रा किमिदम योग्यत्वं शिष्टपरि
गृहीत त्वावच्छेदक धर्मशून्यत्वंचेदुक्तरीत्या स्वरूपासिद्धिः
अथगृहीतावच्छेदकत्वंनतादृश पुरुष गृहीत वृत्तितन्त्रत्वा
दिमत्वं किन्तु पाप फल व्यवस्था विशषद्योतकत्वं तच्छून्य
त्वंच तन्त्रे नहितान्त्रिक मतमनुतिष्ठतां क्वापि पापंस्यात्क
थंत त्फलज्ञापकत्वरूपस्यासुतदद्योतक त्वरूपंस्या दितिचे
न्नचरमे जन्म निश्री विद्योपासको भवति इति भक्तश्च

मुक्तिश्चकरास्थितैवेत्यादितदुक्तेस्तत्फल भोगाभावस्य-
जन्मान्तरी यस्याभावोना प्रामाण्यसाधको मुक्तिस्तत्वे
फलाकाङ्क्षयाऽन्यत्रप्रवर्त्तना योगादामुष्मिक फलसाधन-
प्रवृत्तिनान्तरीयक पापादेरनुदयाच्च व्यवस्था द्योतकत्वहे-
तोरप्रयोजकत्वात् वेदान्ते व्यभिचारश्च तुल्यत्वमेवाहिद्द
घोरभेदवाद मुक्ति मार्ग प्रदर्शकत्वेन नहिधर्मे वेदान्ताना
हरः। अयंतुपरमोधर्मो यद्योगेनात्म दर्शन मितिः योगि
याज्ञवल्क्योक्तेः नचभूमिका विशेषेण कृतानां कर्मणांफल
तद्विशेष कृतानां चतदभाव इति प्रतिकर्म व्यवस्था वेदा
न्तिनामपि युक्ताकथंतु प्रकृते इतिवाच्यम् तान्त्रिकाणाम
पि स्वेष्टदेवता लोके गत्यादि व्यवस्थया शोभननिन्दिताद्वि
सुख दुःखादिम जन्मान्तर व्यवस्थयाच प्रतिकर्म व्यवस्था
याःसुशकत्वात् नहिभूमिका विशेषभूतानां स्वलोकंगत्वेह
फलंतार्किकाणां कायव्यूहेनेव बहुरूपैरेकनचबहुधोप
भुज्येतेत्यत्रवाधकं किंचिदस्ति नवाजन्मान्तरे साहसचौर्य
महापातकादीनांदारिद्र्या स्पृश्यत्वानिन्दा धास्पदत्वं पुण्या
नां सुखित्वस्तुत स्यादि फलकत्वंवा विरुद्धयते चरमत्वंतु

नन्मनः कीटेषुपापे पुसरी सृपेषुदेवेषु पुण्येषु नरेषुयत्रयत्रा न
पियायांतव भक्ति युक्तः स्वात्मैक चिन्मात्र रतोम्बिकेस्याम् क
इत्यादि विशेषभावना परिपाकेण परमात्मनिष्ठताऽच्युत्यैव शु
सूपपादम् पञ्चदेवतो पासकानामपिसमत्वेन पञ्चविषयक स्व
भक्तेरपिस्वात्मैक परमात्मन उपासना निष्ठतयाकायव्यूहा दि
दिना पूर्ववत्फलोप भोगसंभवः एकभक्तस्यतु स्वदेवलोका धे
वाविति सर्वेषाम्परमात्मात्म निष्ठत्वेऽपिप्रत्येक प्राधान्य वि
सर्वसाम्याभ्यासेन पञ्चदेवोपासकैक भक्तत्वादि व्यवस्था या
चरमत्वंच तादृशतादृशभक्तेरेव जन्म जन्मान्तरे भिलष्य वि
त्वेन स्वावच्छिन्न भक्ति विषयेतरविषयक भक्ति प्रागभा णा
वानच्छेदकत्वस्य सर्वजन्मसुसत्वेनोपपाद्यंतथा भक्तस्यत रि
थैव स्वाभिलषितं देवोददातियां यातनुं भक्तः श्राद्धयार्चिमा
तुमिच्छतीति भगवद्गीतोक्तेःनचैवंमुक्त्य१ लाभःसतम स्य
भूमिका मृतानांक्रम मुक्ति प्रदर्शित मार्गेण सहदेवेनचत वि
लाभ संभवात् पूर्वोक्त परमात्मनिष्ठ प्रतीकोपासकानाम प्र
पिसोह मिति प्रत्याभिज्ञा भिज्ञात हरिभैरवात्मनां परब्रह्म मे
णिस्वाभिन्न स्वेष्टदेवे सर्वगुणो पसंहारेण सगुण शाण्डिल्य दे
विद्यावदेवसगुणत्वेन निर्गुणपर्यवसायि ब्रह्मचिन्तारतत्वाद् गु

त्रा नचजन्मान्तर निन्दितत्वा स्पृश्यत्वादिकथनेन सर्वशुद्धि
म् करत्व व्याघातः कथंच प्रायश्चित व्यवस्थेति शङ्क्यम्
व शुद्धेः प्राग्भावित काण्डीय मन्त्र ग्रहण जपादिभि र्व्या-
क ख्यातत्वात् तदितरत्र बोधेतरकालावच्छेदेना स्पृश्यत्वा
हादि प्रायश्चित्तादि व्यवस्था सम्भवात् नचसार्वदिक बो-
धा धेनकृतानांतदभाव इतिवाच्यम् बोधा भावस्य भूमिका
न्य विशेषवद्गृहस्थि परत्वात् तदकरणेच प्रायश्चित्त व्यवस्था
था या यथापापनि श्चयं संभवात् बोधकारणानांच चतुर्धा
स्य विभागेन प्रदर्शितत्वात् सुरारिष्टातिरिक्त मद्ययोरेव ब्राह्म
ना णानांसुरायाश्चत्रैवर्णि कानां वेदस्मृत्यादि विहितयागाति
त रिक्त कालावच्छेदेन पाप बोधनादेवम भक्ष्यत्व विशिष्टस्य
र्विमांसादेरदने पिज्ञेयमृतत्प्रायश्चित्तंच देवतायाःस्वस्वमन्त्र
स्म स्यगायत्री जपादेश्च परमात्म मन्त्रकाण्डस्य वेदस्मृत्यादि
त विहितस्य जपःदशसहस्रं परमात्ममन्त्र जपस्य कृच्छ्र
म प्रत्याम्नायत्वात् प्रायश्चित्तं व्यवहार मात्र शोधकं जाति
-मेलन साधकंनतु उपभोग वारक मित्याहुःकेचित्तन्नदण्डा
ल्यदेरिवदुःख जनकतातौल्येन शास्त्रेण पापादि जनक साम
ग्र्यन्यतर्गत प्रतिबन्धका भाव विघटन द्वाराफल प्रतिरोध

कल्पनात् पापनाशंग्रस्येवसाक्षात्प्रायश्चित्तस्यच कारण
त्वाद्धाकिमधिकंक्षणिकशरीरादिवादिबौद्धप्रायैस्तार्किकैरपि
नव्यैर्दुरित नाशात्मकमुक्ति प्रतिप्रायश्चित्तोप भोगादेः
कारणत्वं स्फुटमूरीकृत मित्यलं प्रपञ्चेन एवमेवसाहस
चौर्यादिषुदण्ड प्रायश्चित्ता दिषुस्फुटेषुरहस्येषुच व्यवस्था
याः सुसंपादत्वात् मनुष्येषु विधि निषेधस्य कलौ प्रायो
यावज्जीवमधिकार लाभात् आरूढ पतित्वादि संभावनारा
हित्य प्रकारक दृढतर निश्चयवतां संन्यास सत्वेऽपितदि
तरकालावच्छेदेन यावज्जीवमधिकारस्य व्यावहारिकस्य व्या
वहारिकोपभोगादिवदेवशरीर यात्रापिचतेन प्रसिद्ध्येदकर्म
णोति गीतोक्त दिशा लाभादितिदिक् देवलोकगतानाम
पिचौर्य प्रतिषिद्ध देशयात्रा देराजनि वारितायाःकरणेसाह
सादौ स्वराजाज्ञाद्यपालनेचदण्डस्यन्याय प्राप्तत्वात् विधि
निषेधयोर्योनिजनराधिकारत्वेन तेषां फलोपभोगस्वराजा
ज्ञापालन तत्रत्य न्यायापेताकरण वेदान्त श्रवणादावधि
कार लाभात्नच तन्त्रादौ क्वाचित् मातृगमनं विहित मि
तिवाच्यम् यन्त्र पूजात त्संस्कार काले शोधनादि रूपता
डनस्य जलसिञ्चनरूप प्रकार विशेषस्य विधानात् स्वीया

तिरिक्तानामपण्यानां चगमनेसर्वत्र दोष श्रवणात् अतएव
महानिर्वाण तन्त्रे विवाह संस्कार प्रकरणे स्वीयात्व संपा-
दनायैवतान्त्रिक विवाहान्तरं चक्रदान कालिकतत्पूजनार्थं
विहितं प्रथम स्वीयायाम दृढमेतरानन्द परायणस्य देवता
ध्यान मङ्गोमा भूदितिस्पष्टंचेदं प्राणतोषिण्याम् कुण्ड
गोलादि रेतोदानं क्वचिद् दृश्यते तस्यकागतिरितिचे त्स-
मयाचार तन्त्रादौ पुष्प द्वययोजनेनरक्तचन्दन दानस्य
तत्रविधानात् कौलिकस्यचयापत्नी सासाक्षादीश्वरी शिवे
तस्यारमणमात्रेण कौलिको नारकी भवेदि त्यादिना व्यभि
चार निषेधेन श्यामारहस्योद्धृतेन स्त्रीमात्र दर्शने श्रीजग-
दम्बादि ध्याननमस्कातिकुल संगमादि ध्यानस्य देव
प्रसन्नताहेतुत्वेनावधारणात् तदुक्तेःस्वीया पण्यस्त्री द्वित
यमात्र विषयस्य योगेन ब्रह्मरन्ध्रतर्पण रूपवजरौली क्रिया
विशेषस्यैवशक्ति पूजादिकस्य विधानात् स्त्री विशेषादि
लेखस्यापिशक्ति संगम तन्त्रादौ गन्धादीतर ब्रह्मसंबन्धेप
ण्याविषयत्वेन व्याख्यानेऽविरोधात्एवंच गृहस्थनांस्व-
च्छन्द तन्त्रोक्ता तिरिक्तनां साधककोटौपरि गणानां प्रति
कर्म व्यवस्थायाः पूर्वोक्तरीत्या संभवेनाऽयोग्यत्वेहेतोःस्व-

रूपा सिद्धत्वान्न प्रामाण्य साधकत्वम्, एवंमहापातकि
संसर्गि परिग्रहयोग्यत्वंच स्वरूपासिद्धम् महापातकित्वस्य
निरुक्तरीत्या प्रायश्चित्त परत्वेनोक्तयावत्संसर्गिणा मना
चरित प्रायश्चित्तानांसंसर्गस्यतद संमतत्वात्स्वरूपा सिद्धो
हेतुः दशमोप्यसिद्धः सत्ययुगेऽपि ब्राह्मणोऽस्य मुखमासी
दित्यादि वेदप्रतिपादित चातुर्वर्ण्य व्यवस्थाया आवश्यकत्वे
नतद्भक्तिभाव संप्रदाय सिद्धेश्चातुवर्ण्य साधारण मन्त्रत्वा
द्वितन्त्रं सत्ययुगादौ स्वीकृत मित्यनुमीयते तथा तन्त्रधर्मः
श्चातु वर्ण्य स्वीकृतत्व समानाधिकरण युगचतुष्टय वृत्तिता
वान् साधारण धर्मत्वात् धृतिः क्षमादमोऽस्तेयं शौच
मिन्द्रियनिग्रहः धीर्विद्या सत्यमक्रोधोदशकं धर्मलक्षण मि
ति म०६।९१ दशविधधर्मवत् इत्यनु मितिरप्यत्रमानम्
तान्त्रिक धर्मो वैदिकधर्म समानाधिकरणः साधारणधर्म
त्वात् सामान्य विशेषयोः सामानाधिकरण्य नियमात् व्या
पकधर्मो व्याप्य धर्मसमानाधिकरणो व्यापकत्वात् इत्यनु
मितिरपि वोध्याएवं तान्त्रिकधर्मःस्वविशिष्टः साधारणधर्म
त्वात् वैशिष्ट्यं स्वावच्छेदक कालवच्छिन्नत्व स्वावच्छेद
कस्थूल शरीरावच्छिन्नत्व स्वीयकालिकसंसर्गा वच्छिन्न

व्याप्यत्ववत्वे तन्निरूपित संसर्गेणस्वविशिष्ट वैदिकधर्मव
दवृत्तित्व स्वसमानाधिकरण वैदिक धर्मवदितरवर्ण वृत्तित्व
स्वतादात्म्यान्यतमेनेतिध्येयम् इतरवर्णस्यापि इमांवाचं
कल्याणी मावदानिजनेभ्य इत्यादि मन्त्रेण य० ।२६। २।
यशोकयाचिद्रीत्या भोजन कर्मकर भृत्यात्मक दक्षिणादि
नाग्रहण प्रदर्शनेन सत्वस्यतद्धर्मस्य क्वचित्सह देवपूजा
दिभाक्तिकालिकोपस्थिति लाभात् एतन्मन्त्रबलेनचवर्ण
स्वे भाक्ति प्रकारकोपदेश विषयता व्यापकंवर्णत्वाद्यन्नैवंवत
मैत्रामित्या द्यप्य नुमादि एवंचवेदानां सत्ययुगादि
वृत्तित्वेनतदीय धर्मसामानाधिकरण्ये तान्त्रिकस्यापित
दानीं तनत्वस्य निष्प्रत्यूहत्वात् युगादि स्तान्त्रिक धर्मवान्
कुण्डयोन्यादि प्रकार भेदभिन्न चक्रकलाप घटित वैदिक
धर्मवत्वादद्यतन कालवत् इत्यादिरीत्या वैदिकधर्मवत्त्वातु
पर्ण्यवत्कालावच्छिन्न वृत्तिकत्वस्य तन्त्रे सर्वसम्मतत्वात्
अपिच वेदानां सत्ययुगादि वृत्तित्वमस्तिनवा नोचेद्व तौव्य
भिचारो वेदेऽपि साध्या भाववति प्रमाणभूते हेतोःसत्वात्
मस्तिचेत्परेर्षांकरीत्यावेदप्रामाण्य स्वीकर्त्रे स्वीकृतत्वा भावा
सत्ययुगादि वृत्तित्वानु मानेनस्वरूपा सिद्धोहेतुः तेनापिच

हेतुनाधर्म प्रमाण्यानुमानात्सत्प्रतिपक्षितश्च चिकीर्षाहेतु भूतभ्रान्ति मत्पुरुषबुद्धि प्रणीतत्वं चोपाधिः शाक्यादि ग्रन्थ जाते उपाधे स्साध्य व्यापकत्वात्पक्षे साधना व्यापकत्वाच्च किञ्चविशेषणस्य सत्ययुगादावस्वीकृतत्वेनेत्यस्यहेत्व सिद्धिवारकत्वेऽपि व्यभिचारावारकत्वेन व्यर्थतयासाध्य संबन्धितावच्छेदकरूप व्याप्ति विरहेणव्यर्थत्वादसिद्धिस्तथैवातएवोदयनाचार्याएकाम्सिद्धिपरिहरतोद्वि तीयापत्तेः अ-थहेत्वसिद्धिवारणायतन्त्राण्यसदातनानिसत्ययुगादावस्वीकृतत्वादि त्यनुमानान्तर सूत्रनायतदुपादानेन नदोष इत्युच्यते तथापि पूर्वोक्तरीत्या स्वरूपा सिद्धिरुभयत्र पूर्वोक्तोपाधिसत्वे व्याप्यत्वा सिद्धिश्च किञ्च न सदातनत्व सामान्याभाव साधनेतस्यैवदशमेहतुत्वे वेदानामपि प्रलयावच्छेदेन ह्रासदर्शनतोह्रासः संप्रदायस्य मीयता मिति कुसुमाञ्जल्युक्त युक्त्या अभाव सिद्धौ व्यभिचारो वेदान्तर्भावेणाशक्य वारणः अथसर्वकालावच्छिन्न ग्राह्यत्व योग्यत्वंसदातनत्वं तदभावश्च हेतु र्योग्यत्वं स्वसत्ता समानकालिक ग्राह्यतावच्छेदकवेदत्वादिमत्वंतच्चवेदकाले सर्वदैवास्तीति चेन्नतद्ववतन्त्रेतत्सत्वेना सिद्धत्वात् किञ्चसर्वं

शावच्छिन्न तादृश ग्राह्यत्व सामान्या भावोहेतुर्यत्किं चिदं शावच्छिन्न तादृश ग्राह्यत्वा भावो निरुक्त ग्राह्यतावच्छेदक धर्मावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूप वृत्तिप्रतियोगिताकाभावोवारूप वृत्तित्वंचस्वावच्छेदकता त्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंस र्गेणतत्रनाद्यो यद्यपि अश्वालम्भमिति स्मृति निषेधेनगवा- लम्भ बोधकभागे तादृश ग्राह्यतावच्छेदका नाविगीत वि- धिकवेदत्वादेरभावेन व्यभिचार तादवस्थ्यात् निषिध्य मान कालावच्छेदेन ग्राह्यत्ववारणाय वेदत्वं विसृज्य अवि गीत विधिकत्व समाना धिकरण वेदत्वस्यैव तादृशग्राह्य त्वावच्छेदकत्वरूपतादृश योग्यत्वस्य स्वीकरणीयत्वात् वि गीतत्वंच व्यवस्थापायिकन्यायाधिगत निषिद्ध कालदेशा दितत्कत्वा भावश्चा विगीतत्वमत्रज्ञेयम् यत्किं चिदंशाव च्छिन्न तादृशग्राह्यत्वाभावश्चानभिलषित ग्राह्यकतादृश वेदभागे व्यभिचारितः बजरौलि क्रियाङ्गमात्र ग्राह्यपञ्च पञ्चमरूप तान्त्रिक पूजा प्रकारस्याद्य बजरौली क्रिया वि- षयप्रमाविरहेणाग्राह्यत्वेऽपितदितर भागावच्छेदेन ग्राह्य त्वाग्रागासिद्धो निरुक्तरीत्या वेदस्वीकर्त्रे स्वीकृत वेदका

लिक साधारणधर्म बोधकत्वादिहेतु भिः सत्प्रतिपक्षितश्चस्प्र
तथा विधयत्किंचिदंशस्य सर्वप्राह्यत्वेऽविगानात् वेदेपिहविर्था
र्भिरेके इत्यादिना सोमादेर्मद्यस्य यागाद्यन्तर्गतस्यापानेस्व
निन्दायानरकप्राप्तिरूपाया बोधनात् नतृतीयः तन्त्रेऽप्य त्य
सिद्धत्वा दितिदिक् महर्ष्यतिरिक्त कल्पितत्वादिति वेदव्यभि
भिचरितोहेतुःमहर्षिपदमाप्तोपलक्षणं चेत्स्वरूपासिद्धः नं
सर्वज्ञ प्रणीतत्वंचेद्ददव त्तन्त्रेप्य सिद्धम् स्मृतिषु व्यभिचारना
वारणाय सर्वज्ञतात्पर्यविषयात्वाचेतत्वे सत्याप्त प्रणीत प्र
त्वस्य शाक्यादि ग्रन्थावृत्तेर्हेतोःपरिष्करणे सर्वज्ञ प्रणीतत्व म
भ्युपगन्तॄणांपरेषामपि तदसिद्धि वारणं दुःशकम् प्रत्युतान
धारीत्याप्रत्यवस्थानेवेदाःधर्मसंदिग्धप्रमाणकाःसंदिग्धकर्त
कत्वादित्याभाससाम्यंसर्वज्ञभरव प्रणीतत्वादिना ऽऽपादयितु
सुशकम् निःश्वसितावेदइतिनश्चशिवसर्वज्ञेश्वर भैरवप्रणीत
त्वहेतुनातुल्यंप्रामाण्यसाधनं सत्प्रतिपक्षश्चतत्प्रणेतु र्भावन
भैरवादिसत्ताज्ञानाधीन संदिग्धकर्तृकत्वादिना ऽऽभासस
म्येनिःश्वसितृभावना ज्ञानाधी नज्ञानेनतेनैवहेतुना
वेदेऽप्या भाससाम्यं भावनाकृन्नामाद्यनुल्लेखश्चतदुपस्था
कपदाभावश्चो भयत्र तुल्यएव मन्त्रायुर्वेद प्रामाण्यवच्च

प्रामाण्य साध प्रामाण्यादि तिगोत्तमरीतिस्तुल्यैवनस्त
थाऽग्रहग्रहिलमहिला जनसन्तोषमानमोदमानमानसमु-
नेस्वमर्द्दनेनिरर्थकाक्षर मन्त्रघटितत्वादितिहाऊहीषी,हुंफडि
त्यादि निधनघटितो हादिगानचतुष्टयात्मक सामवेदे व्य
भिचारितोहेतुः स्वरूपासिद्धश्चतन्त्रे प्रतिवीजंसंकेतिता
नां मायालक्ष्म्यादिनाम्नां योजनेनयथार्थ विभक्त्यूहादि
नालब्धार्थकत्वात् संकेतहेतुश्च गुह्यार्थाभिरक्षणमेवलोका
प्रयुक्तत्वेन संदिग्धा शुद्धिकत्व प्रयोज्य निरर्थकत्व बाल-
भाषितत्वा द्यापादनस्य छान्दस प्रयोगवज्जायमानस्य वार
णायरक्षार्थं वेदानामध्येयं व्याकरण मितिमहाभाष्योक्त
दिशाबीजकोषादि प्रणयनफलस्योन्नयन संभवात् कथम
न्यथा संकेतैस्त त्प्रणयणं साक्षादेवबीजोच्चारण संभवात्
गुह्यार्थकत्व रूपनिरर्थकत्वमपिनहेतु वैदादौ व्यभिचारात्
अप्रयोजकत्वात्प्रयोदशोप्यजातफलपुत्रेष्ट्यादिबोधकवेद
भागव्यभिचरितोहेतुः साधनवैगुण्यादिनातदभावेस्वेतर
कारणसत्ताधीनस्वसत्तया कार्यजनकता बोधकत्वेनस्वरूपा
सिद्धः मन्त्रायुर्वेदेत्यादि गौत्तमरीत्या प्रामाण्य साधनेऽ
दृष्टफलकवेद भागस्यैव सत्प्राति पक्षितश्च तदर्थमत्रच-

प्रत्यक्षफलकशव साधन प्रकारस्य निन्दितत्वाना चरणीय
त्वादि स्वीकारेऽपि मन्त्रायुर्वेदेतिसूत्रभाष्योक्त सर्पादिमन्त्र
वत्प्रामाण्य साधकेहेतौदृष्टान्ततयानिदर्शनार्थ मेवतद्बोध
नात् वेदेऽपिहिकुलोच्छेदकत्वेन निन्दितस्यापि गारुडमन्त्र
स्योपदेशो निष्कुलत्वेऽप्यन्य जीवरक्षा साधकत्वेन विहित
एवप्रामाण्यदार्ढ्याय एवं भैरवस्य श्मशानवासिनःप्रसादेन
लभ्यस्यश्मशान कालीयोगिनीकलापतद्भूतादिगणजात
स्य साधनोपदेशोहि प्रामाण्य रक्षार्थेएवयथाहि वैदिकाथ
र्वणिक कृत्यादे रप्सरोगण सिद्ध्यादेरकर्त्तव्यत्वेऽपि रक्षा
र्थमेव प्रामाण्यस्य तदुपदेशस्तथात्रापि वक्तव्यत्वात् याव
ज्जीव मग्निहोत्रं जुहुयात्स्वर्गकाम इतिवदेकादशी व्रतादि
वच्च संयोग पृथक्त्वन्यायेन ।४।३।३।अ०जैमिन्युक्तेन भैरव
देवी नारायणाद्यर्चादिरूपनित्य काम्यकर्मणामपि वैदिका
थर्वणिक मारणादि कर्मवल्लब्धफलत्वेन निष्फलत्वाभावान्
त् यद्यपि लब्धफलत्वेऽपिश्येनेना भिचरन्नित्यादावुपदेशन
वैधत्वाद् मारण मन्त्रेषु दोषाभावस्तथापि सृष्टिक्षति दोषा
त्याज्यता तेषां सफलत्वेऽपि युक्तैव निरर्थकोवेवपूजाङ्गहिं
सायाःकर्त्तव्यत्वा नौचित्यात् तत्प्रतिषेधस्यापियुक्तत्वेव ता

णस्य महाब्राह्मणे १० । सण्डेनरमेधस्य वार्षिकस्य विधाने मदेश प्र नरहिंसादावपि दोषाभावेऽपि सृष्टि हान्या दि नि दा चरणस्वीकारानौ चित्यवन्माहिंस्यादिति विधे र्गोचरत्वाति रिक्तस्थलएव प्राणवियोगानुकूल शरीर कृपा णाघात विषदानादि व्यापार वृत्तिजाति विशेषावच्छिन्नस्यै वनिषेधेन साक्षादनिषिद्धत्वेऽपि सृष्टिक्षतिभयादेवनिन्दा माचरणादि स्वीकार साधन प्रयासादद्यतन कालेऽनाचरणा त्अतएवालब्धफलत्वेऽपि मन्त्राणां प्रायोनित्य काम्यानु- ष्ठान मेवाग्निहोत्रादिवन्मूर्तियन्त्रादि पूजादिक मेवानेक विधाविधाना चरणे रुपास्य देवता प्रीतिमात्रायार्चत प्रार्च इति श्रुत्युपदिष्टतया विधीयते देवतान्त्रिकैरितिदिक् १अत एवदेवतन्त्र शास्त्रे सामान्यतो विघ्नवारणार्थतदानु कूल्या र्थकिंचि द्वलि विधौनैवेद्यस्य देवतोद्देश्येनद्रव्यत्याग वि धानेऽपि विशेषतोमृत मनुष्यो द्देश्यकतया प्राधान्येननःकिं वेदपि कर्मविहित मिति कृतमाधिक पल्लवितेन अहंभैरव

---

१—अयेन विचारस्यप्रकृतेनुपयोग। तदपेक्षयेदंदिक्फवरत्वं तद्विचारस्य विस्तरत्वात्

इति चतुर्दशोऽपिहेतुःसंदिग्धासिद्धः संदिग्ध व्यभिचारश्च
वेदयोऽन्यांदेवता मुपास्ते सगर्त्तेपतती त्युक्ताभेदनैवोपास
नायाःश्रीशङ्कराचार्यै वैष्णावाचार्यैश्च बहुभिःस्वीकारादा
स्तिकानां प्रायस्तत्रैव निर्भरात् द्वौवेदेवा मनुष्यदेवादेव
देवाश्चे तिशतपथोक्त कर्मदेवता तिरिक्तानांवस्तुतः स्वात्म
रूपाणा मेवामित्र पुत्रभ्रात्रादिवदात्मी यात्मा भेदभाव
नाया देहादि विशिष्टाया याते रुद्रशिवातनू स्तुहिश्रुतंगर्त
सदम् नीलग्रीवाःशितिकण्ठा द्व्यङ्गुलादिबोधकचत्वा
शश्चमे इत्यादि वेदादि बोधितायाःसिकताश्चमे लौहंचमे
सीसंचमे मृच्चमे आत्माचमे इत्यादि रीत्या मूर्त्तिलिङ्गा
रूपेण वेदेन तन्मूलकत्वेन स्मृतिरूपयाज्ञवल्क्यादि पुरा
तन्त्रादि प्रतिपादिताया यथासंभवं पञ्चदेवतादि यन्त्रमन्
पूजा प्रकारादिभिः पूजाजपादि ध्यानादि भिरर्चित प्रा
तेत्यादि श्रुत्या यथा विनियोगं वैधलैङ्गिक मन्त्रै र्विहित
स्य शास्त्रमर्यादया लाभात् तथात्माभेदभावनावतैव
णानिःश्वासितो वेदइत्यनेन कृतत्व बोधनस्य वेदेऽपि तु
स्वात् पूर्वहेतुवत्त द्वारण प्रकारस्य तन्त्रेऽपि तुल्यत्वाच्च

१-गर्त्तेसीदतितिष्ठ तीतिव्युत्पत्यालिङ्गयोग्याकार छिद्रस्यस्था

मीमांसक कल्पेनित्यनिर्दोषत्वेन वेद प्रामाण्य मिति तदनु
रोधेन तुल्यत्वा भाव इत्युच्येत तदपिन शब्दस्य प्रलयान्त
सृष्ट्याद्युत्पन्नगका राद्यकात्मकत्वेन सजातीयोच्चारणान
पेक्षोच्चारण कस्वरूपपौरुषेयत्वा भावेऽपि कर्तृराहितत्वस्यातो
ऽन्यदार्त्त मित्यादि श्रुत्या ब्रह्मातिरिक्तस्या नित्यत्वेन निःश्व
सित इत्यादि श्रुतिविरुद्धत्वेनच स्वीकारा नौचित्या त्तादृ-
शापौरुषेयत्व नित्यत्व योस्तन्त्रेऽपि तुल्ययुक्त्या स्वीकार
करणात् सामवे. २।१।४।इत्यादौ हुंफट् इत्यादे रामतापि न्या
दि मन्त्रकलापस्य मातृकावर्ण जालस्य वेदस्फुटस्यैवतन्त्रा
दौ स्वीकारात्पद्धतिक्रमकलाप सहस्र नामादेः स्मृतित्वेन
पुराणादेरिवानु पूर्वीभेदेऽपि वस्त्वनादि प्रवाहत्वेन वेदमू-
लत्वेनच प्रामाण्यानवघातात् तेनैवदेहभेद माश्रित्यस्वा
नुभवस्मरणेनोपदेश इति स्वाकारेण ऋष्यन्तरकर्तृक
स्मृत्यपेक्षयाऽभ्य र्हितत्वाच्चत स्प्रामाण्या भाव साधक
हेतवोऽहेतव एवेत्यनवद्यम् एतेनाग्रिमहेतुरपि स्वरूपासि
द्ध एव वेदास्वीकर्तृ प्रतिभाविषयत्वं चोपाधिः शिष्टत्वस्य
सप्तमहेतूक्त रीत्यातद्गृहीत साधारण्येन प्रणेतरिकथमपि
नाशिष्टत्व संभावना मात्रशङ्कापङ्क कलङ्कटङ्कावकाशपास्त

विलासशेषावेशोऽपीत्यत्रन विवाद वादाघात पात इति मन्त्र शिष्ट प्रणीतं शिष्ट गृहीतत्वादिति व्याप्य व्यतिरेक व्याघातेन व्यापक व्यतिरेक प्रतिक्षेपाद सिद्धेः षोडशाद्वसौ सुरामांसरेतो भक्षण व्यभिचारादि विधायकत्वा दित्यत्र व्यभिचार विधायकत्वं रेतो भक्षण विधायकत्वं चन प्रमाण सिद्धम् तादृश विध्यनु पलब्धेः परैरप्यनु लेखाच्च पञ्चमस्य निरुक्ताष्ठ हेत्वादि रीत्या स्वीयापरत्वेन पुंस्त्रीपुष्प मिथुन संपर्क कल्पितरक्त चन्दनादि रसपरत्वेनच समयाचारे वि धानेनश्यामारहस्योक्तेः सर्वतीर्थमयः स्वामीसर्वदेवमयः पतिः सर्ववेदमयश्चैव पतिरेव महागुरुः सर्वदेवमयं हित्वा या नारी परगोचराशूकरी गर्दभीकाकीशृगालीजायते ध्रुवमि- त्यादि दीक्षितस्त्री शिक्षा वाक्ये निषेधाच्च व्यभिचारेतज्ज रेतो भक्षणादि विधानस्या लाभात् भगापूजा प्रकारस्य लिखित यन्त्राभिप्रायकत्वाद्वेदीपकुण्डयो न्यादिमध्येऽश्व लिङ्ग स्थापनंतरपुर्वकमन्त्र संस्कार हवनाद्यर्थ मश्वमेधी यगणानांत्वे त्यादि मन्त्रेण बोधित मेधातिलद्वत्तन्त्रे यो।ग्नि पदस्य तदाकार यन्त्र विशेष बोधनेहिनका चित्क्षति रिति पाशुपतादि भिस्तदभिध्यानमप्युक्त मेवेत्य भिध्यान मात्रे-

णतत्पूजादावपिनदोष इतिरहस्यमतएवमहीधरेणा भि
ध्यान मात्र मुक्तमेवंकात्यायन श्रौत सूत्रानुसारेण एवंरेतः
सेकलेख मात्रेण तन्त्रेऽप्रामाण्य शङ्कायांवेदेप्यग्निर्मूर्धेत्या
दौरेतःशब्दस्यो ल्लेखेन वेदेऽप्य प्रामाण्य शङ्कापत्तिर्व्य भि-
चारश्चतन्त्रा प्रामाण्यसाधकानुमाने तल्लेख मात्रेणतत्कर्त्त
व्यतापत्तिरपितुल्या प्रस्युतहवनेसंश्रव प्राशनादि विधि
नातद्भक्ष्यत्वस्याप्यापत्ति रधिका विधि प्रवर्त्तकत्व निर्वाहा
यापद्येतातएवरेतः पूजादि बीभत्स विधायकत्वेना प्रामा
ण्यसाधनेऽप्यासिद्धोहेतु रापद्यते वेदेऽप्या भास साम्येव्य
भिचारोधागला निजनकत्वरूप बीभत्सत्वस्याननुगमेनग
व्यघृता द्यावपिसत्वेन तद्धोमादि विधायके व्यभिचरित
त्वापत्तिस्तस्याप्य प्रामाण्ये नित्यनै मित्तिकादि कर्मकाण्ड
मात्रोच्छेदापत्तिश्च विनियोग विशेषतात्पर्यादिना विमुच्य
गला न्यादिकंस्वबुद्धिकल्पनंकात्यायनव्यासादिशङ्कराचार्य
प्राक्तन महर्षिगणनिचयैकवाक्यतयाऽग्निर्मूर्धेत्यादेर्मदुक्ता
न्यार्थकत्वं स्वीक्रियतेचेत्तन्त्रेऽपितथैव स्वीकुरु भक्षणस्या
नुल्लिखितस्या विहितस्य लेखेन किमिति कलङ्कयसिनि
ष्कलङ्कास्तिकाम् वज्रोलीक्रिया ब्रह्मरन्ध्रहवनाख्य शक्ति

संगमस्यैवशक्तिसंगमतन्त्रादेश्चिद्दल्ली समयाचारश्यामार
हस्यो द्धृतकुल चूडामण्यादि तन्त्रैक वाक्यतया योगचर्या
विशेष विधानस्यतात्पर्यं विषयताया औचित्यात् तस्यसंगम
स्यापि स्वीया विशेषादौ पूर्वनिर्धारितत्वा त्तन्मतस्य भैरवी
यसकलवाक्यैकवाक्यता सिद्धत्वान्न कापिक्षतिः महर्षि
सर्वज्ञवाक्यानुसारिणाम् अथोच्येत दाक्षिणादि मतानांक्रम
स्सत्तवभेदा उपलभ्यन्ते तथाहि सर्वेभ्यश्चोत्तमावेदा वेदे
भ्योवैष्णवं मतंवैष्णवा दुत्तमंशैवं शैवाद्दाक्षिणमुत्तमं दाक्षि
णादुत्तमं वामं वामात्सिद्धान्त मुत्तमं सिद्धन्ता दुत्तमं कौलं
कौलात्परतरंनहि इतितथा दक्षिणनिन्दा कुलार्णवादौ
ब्राह्मणानां सदापेयेत्यादि विनागौडींच माध्वींचसुरांयःपूज
येच्छिवां शैवंनारायणं सौरंदेवता शापमाप्नुयात् इतिगन्धो
त्तमानिर्णयेत दुद्धृतनष्ट शाखाकग्वेदे पवित्रापापम श्रृण्वा
त्यसिहान्तिपापंनयां शापितुं कोऽपिशक्तः सशापांवैमन्यमा
नाः कलौनरानरकवासकारिणः इतिएवंमेरु तन्त्र चिद्द
ल्ली तन्त्रादौवाम निन्दा वामस्य पतितत्वात्तत्पाप परिहा
रार्थं दक्षिण माश्रयेदि त्युक्त्वा पतितपाविन्यास्तारिण्या
ज्ञानहत्या मन्त्रध्यानादि क्रमनिर्देशवचनात्एवंच दक्षिण

भयोः क्रमोऽपि पूर्वः क्रमतो विपरीत इतिपरस्पर वि-
रोधात्कथमेक वाक्यतेतिचेन्न पुरश्चर्यादिरूप दक्षिणस्य
गृहस्थादिरूपवामस्य समुच्चयेनैव दृष्टत्वा त्क्वचिच्चनैष्ठिका
दिस्थलेविकल्पस्य दृष्टत्वादैच्छिक विकल्पसमुच्चय बोधना
यप्रशंसापरत्वेन पुरश्चर्या मात्रैनैष्ठिकेन गृहस्थि भिःपुरश्च
र्यावामयोः समावेश इतिबोध्यते गृहस्थाद्यन्तर्भावेणन
वामादीनांमतभेदः सुरादिमत्वंतूभयत्र समानमेव ब्रह्म-
चर्य नियमान्तःपाति शक्ति पूजायाःस्वीया विशेष विषया
याः पूर्वोक्ताया इतिरीत्योभय स्वीकारा योभय प्रशंसार्थ
मेवतद्वाक्यपरम्परा ब्रह्मचर्यदशादि दिव्रामिति स्वीकृत्यज
लहस्तवाचिक प्रतिज्ञा दिनातद्भङ्गेच निन्दा इत्येवमुदिते
जुहोती त्यादि वेदवाक्य वंन्यायदर्शन रीत्या स्मृत्यनव का
शादि वैयासिक दोषवारणायनहि निन्दा निन्द्यं निन्दयितुं
प्रवृत्ता अपितुस्तुत्यंस्तोतुमितिन्यायात् क्रमविरोधोपक्रम
नियम भङ्गायैच्छिक पूर्वापरी भावेन तदूरीकारेणै कतासं-
भवेन वारयितुंपार्यतेएतेनाहिसकलवेदादि ग्रन्थाणां दक्षिण
वामादीनां सर्वेषां प्रामाण्यं सिद्ध्यति दक्षिणा दुत्तमंवा
मामिति प्रोच्य ग्रन्थान्त रेवामाद्दक्षिणस्यै वोत्तमत्व बोधने

यामोभयोःपरस्परोत्तमत्वस्य बोधनेनस्थालीपुलाकन्यायेन सर्वेषांतथात्वेनसम प्रामाण्यस्यलाभोमूलभूत वेदस्यच प्रथम मुपादाने सर्वाधिकत्वं तत्रबोध्यतेतेन वेदानां स्मृतीनांतन्द्भेदेन शिव विष्णु देव्यादि पञ्चदेवता पूजाधर्मादि शास्त्राणां दक्षिणादि तन्त्राणां सर्वेषां भैरव प्रणीतानामेकवाक्यतयैवस्तुति निन्दा प्रशंसावादार्थवाद विधिवादादिपर्यालोचन प्रकारेण धर्मानिर्णयः कर्त्तव्यः अथातोधर्मजिज्ञासे त्यारभ्याधीतत्वेन मुख्यतयाऽऽस्तिकानां जैमिनिव्यास परिशोधिततर्क प्राधान्येन श्रुतिव्यवस्था दृष्टान्तेनैवधार्मिक विषयस्यतदुपयोगिनोमुमुक्षुता पूर्त्यर्थत्वेन बहुविधशङ्काग्रास प्रासविनाशकत्वेन नित्यमुक्तस्वरूपस्य शिसूत्रार्थ ज्ञानपूर्वकोप निषदर्थ बोधेन छायामता भासानाचार्याद्युक्तान् पूर्वोत्तरपक्षेण यथायथं व्यवस्थाप्य वेदान्तानां नित्यमुक्त स्वरूपाद्वैतव्यवस्थापनं व्याससूत्रैर्विधायस्वोचितवर्णाश्र मानुरोधि नित्य धर्मानुष्ठानादिना कालंयापयन् भोग प्रारब्धी यंजगदम्बा प्रसाद लभ्य मुपभुञ्जन् रटन् एवचतद्देवता भेदस्तन्नामपरम्परां विहरेत इत्याशयेनक्रम विरोधस्या किंचित्करत्वात् नच्चवेदानां मूलत्वेनो

पन्यासः।विष्णु शिवादीनां स्मृति भेदसाकल्य ग्रहणायदाक्षि
णवामयो र्गृहस्थपुरश्चर्या रूपब्रह्मचर्यं धर्मभेद प्रदर्शनाय
भेदेनमननान्मत्त शब्देनो पन्यासेपि सिद्धान्त कौलयोःकि
मित्युपादान मितिवाच्यम् तन्त्रनाम भेदेन तन्मननात्
तेषांच प्रयोजनस्यवक्ष्यमाणत्वाच्चद्रव्यभेदस्तु दक्षिण
बामादौनास्त्येवयोऽपिकाचित्तन्त्रे उपलभ्यते सोपिपरस्पर
प्रशंसयातत्सकलद्रव्यस्तुत्यर्थत्वेएवनहिंवामनिन्दा दक्षिण
निन्दा भःमिकारूप एवभेदापादन मन्तरानिन्दा प्रवर्त्तयि
यितुं शक्यते परस्पर भावाभावनिन्दयोभय प्रशंसालाभात्
तृतीयमार्गा भावात् अतएव वेदविरुद्ध जैनादि तुल्यत्वेन
दक्षिणमतस्य अतएव सर्वेभ्य इतिपदेनसर्वोत्कृष्टत्वं वेद-
स्योक्त्वासर्व शब्देनो पात्तानामेव स्मार्त्ता नामुपन्यासःएते
नोत्तम शब्दस्य चरमार्थत्वं चरमत्वंच पश्चाद्भवत्वरूपमित्य
र्थःस्यादिति शङ्कानिरस्तावामस्यदक्षिण पश्चाद्भवत्वेएककर्तृ
कतन्निन्दानुपलम्भ प्रसङ्गात् पुरासत्ययुगजातत्व सदातन
त्वादि साधनाच्च पूजा प्रकार भेदश्चबहु भेदस्त त्तद्देशेष्व
पितथा भेदप्रचारस्तन्मूलकस्तेनैवचकेरल काश्मीरादि
संप्रदाय शब्दा भैरवेण स्फुटम प्रदर्शितत्वाच्चीनादि शब्दा

नामपि भाविराग प्राप्ततत्तद्देशाचार मात्रानुवादार्थ त्वाच्च शास्त्रविरुद्धत्वेननिन्दिततदाचारत्वेचहेयत्वम्द्रव्यभेदाभावस्यचमतैक्यस्य चानुपद मुक्तत्वात् एवमन्यत्रापि निन्दाप्रशंसा व्यवस्थायत्तु संग्रह ग्रन्थेषु आगम भेदव्यवस्थाया व्यवस्थापनमुक्तंसन्न स्वार्थे प्रमाणंभवति किन्तुतेषांतन्त्र प्रामाण्य व्यवस्थापन मात्रतात्पर्यकत्वेन तन्त्रप्रामाण्य व्यवस्था यथास्यात्तथाचर्य मित्यर्थ आगम भेदेन व्यवस्थापक तन्त्र वाक्या भावेन संग्रह ग्रन्थानांतथाता त्पर्यकत्वस्यैवकल्पयितव्यत्वा दन्यथा विरोधस्या परिहार्य त्वे उभया प्रमाण्य प्रसङ्गात् अतएव सर्वज्ञरुद्रादि प्रणीत त्वेन रुद्रयामलादीनां प्रामाण्यंतुल्य मिति विरोधमा शङ्क्यमाध्व भाष्येस्मृत्यनवेति सूत्रेविष्णुयामला दीनामप्याद रेण सर्वशास्त्राविरोधएवता पर्य मितिनिर्धारित मितिनिर्णीतंप्राक्सुराविचारश्चोक्तएवत द्विधायक वेदव्यभिचारान्नाप्रामाण्य साधकत्वं सुराघटितहेतोः सुराशब्दस्य वेदहविर्भिरके इतिमन्त्रैः सवनानिष्पादित सोमरसादौ प्रासिद्धत्वं स्फुटं गौणम्मद्यार्थकत्वा दीतिचोक्तं प्राक्स्फुटंचषुञ्धातोः सुरासंधानार्थकत्वं तस्मिन्मन्त्रेच सुन्वन्ति सोममिति

तत्फलंचशचीमिदन्त इतिमादकत्वंच प्रसिद्धं स्वादुष्किला
यंमधुमा उतायंती व्रःकिलायंरसवाँउतायमुउतो ऽस्यपपि
वां समिन्द्रंनक इचनसहत आहवेषु ।१। अयंस्वादु रिहम
दिष्ठ आसयस्येन्द्रो वृत्रहत्यैममादं पुरूणियश्चौ त्नाशम्बर
स्यविनवर्तिनवंचेदह्यो ऽहन् ।२। ऋग्वेदे ४अ. अ.३२. वर्गे
सोमरसस्तुतौतत्स्वरूपवर्णनंतीक्षण स्वादुपाक मधुररसा
स्वादमद जनकशत्रु भेदप्रयोजक वीरता प्रयोजकतया चि
कित्सा शास्त्रोक्त मद्यलक्षणेन तुल्यंचरकेच १२ अध्याये
आदावेवमद्य प्रसङ्गेन सोमो भूत्वाद्वि जातीन्यो युङ्क्तेश्रे
योभिरुत्तमै रितिमद्यत्वमुक्तं धात्वर्थेनैवचतथा लभ्यते
इति प्रदर्शित पूर्वामिति तद्घटितत्वेन वेदस्या प्रामाण्य प्रस
ङ्गोविपर्यये व्यभिचारोहेतो रितिविरम्यते अशुचिद्रव्यसंप
र्किं क्रिया विधिरूपत्वादितिसप्तदशहेतु स्तत्राशुचि द्रव्य
स्यतत्वं याद्दशसुरात्वा दिकंभवतामभिहितंता दृशस्यता
दृशत्वंतूक्त मेवतद्यथासंभवतदनुकूल व्यवस्थायां तथा
द्रव्यस्य शुचित्वात् स्वरूपासिद्धोहेतु र्द्रव्येऽशुचित्वंहि पाप
प्रयोजकता वच्छेदक आगन्तुक स्वाभाविक भेदेन द्विविधो
धर्मःउच्छिष्टादौ आगन्तुकःस्वाभाविकः पुरीषादौउभय वि

घस्यस्पर्शादि द्वारापाप जनकत्वंतच्चवैधस्पर्श भोजनाद
ववैधानिषिद्धस्यतु तत्वेमानाभावः वैधस्यतु प्रत्युतपुण्य
जनकता वच्छेदक स्वाभाविकौपाधिक धर्मवत्वेना वश्याङ्गी
कार्यत्वा त्तद्द्रव्य घटितहेतूनां विरुद्धत्वं प्रामाण्यानुमाप
कत्वे तन्त्रधर्मे प्रमाणं स्वाभावि कौपाधि कान्यतर पुण्य
जनकता वच्छेदक धर्मवद्द्रव्य घटितत्वादित्येवंसत्प्रति
पक्षश्चउपाधिश्च मन्त्रादि जनित संस्कार विशेषो निर्मथ्यप्रो
क्षण्याद्य धिकरण न्यायात् करणादि शब्दानां तथात्वात्
अथमृतनरस्प र्शादेः सम्पार्कं क्रिया विधायकत्व मन्त्रहेतु
वाक्येना भिप्रेतंतत्स्पर्शादावशुचिताया याज्ञवल्कयादौ
सुप्रसिद्धत्वादितिचेन्नताण्ड्य महाब्राह्मणेन रमेध प्रक
णेदशमेखण्डे विदित यज्ञस्य शवघटितत्वेन श्रुति स्मृति
विरोधापत्तौ विधिकाण्डेशवस्पर्शादेरपापजनकत्वात् प्रत्यु
वेदेव्यभिचारात् हेतोरसाधकत्वा पत्तिरितिनकथमपि
प्रामाण्या भावस्तन्त्राणा मिति अत्रचपरस्पर विरुद्धत्वा
१स्मृति त्वेऽपिन तन्त्र प्रामाण्यं२नवास्मार्त्तस्य वैदिकत्व
मिति केचित् स्मृतौच तन्त्राणां निन्दितत्व मुक्तं४नचैष
ग्राह्यत्व मुक्तं५ नवा वेदमन्त्रैस्तन्त्रोक्त क्रिया कलापोदन

वैष्णवाचार्यैस्तत्परिग्रहउक्तो नचात्र वैष्णवोपदेशइतिएता
सांसर्वासांशङ्कानामप्यत्रनावकाश विशेषविका सावेश
गन्धपात घातोऽपि तथाहि परस्पर विरुद्धत्वात्तन्त्र मिति
हेतुर्यदिविरुद्धतात्पर्यार्थकस्तर्हिस्वरूपासिद्धेरसाधकःमतभे
दादिरूपतात्पर्यविरोधगन्धस्यपुरेवमतैक्य प्रदर्शनेनवारित
चरत्वात्यादिशक्यार्थविरोधएषामभिमतस्तर्हिवेदेऽव्यभिचा
रविष्टि प्रकरणे छान्दोग्यते तिरीय गोपालतापिन्यादौक्रम
भेददर्शनात्तत्र सृष्टिवाक्यानां ब्रह्मणि निषेध फलकत्वं तदि
तरत्रसत्ता प्रतिषेधे तन्निष्ठायाश्चनेहनानास्ती त्यादिना
प्रतिषेधे जगतो मिथ्यात्व सिद्धेरवता त्पर्यतोऽविरोधेऽपि
शक्यार्थ विरोधस्य तत्रापि सत्वात् क्रमस्य विजातीयत्वात्
कथंचित्तत्र सति संभवे सर्व शाखोप संहान्यायेम जै० २।४
।२। अधि ८-३२ सू ३।३।२व्या., प्राविगीतत्वा धिकरण न्या
येन १।४।१-२।४।९। वैया.चक्रमैकवाक्यताऽपि तत्रस्वी क्रि
यतेपरन्तु गोपालतापिनी विरोध परिहारस्य शक्यार्थेना
परिहारात्ता त्पर्यार्थेनैव परिहर्त्तव्यत्वात् एवंचयोदाक्षिण्यं
विनाविप्रो महामायांप्रपूजयेत्स पापः स्वर्गलोकात्तुच्युतो
भवतिरोग धृदित्यादि निन्दा वाक्यस्यापि ब्रह्मचर्यारमक

पुरश्चरण प्रशंसा परत्वेन व्यवस्थाविनागौडी मित्यादिनात
स्यापि निन्दित त्वादिति पुरोक्तैव व्यवस्थाऽदाक्षिण्य मिति
छेदनास्यापि निन्दा परत्वेन व्याख्यान संभवाच्च अचातुर्य
मदाक्षिण्यमावरणाद्यज्ञानरूप मित्यपि व्याख्यातुं शक्यत्वा
दितिनप्रथमोहेतुरासिद्धेः एवमेवहि पुराणादौ व्यवस्था पर
स्पर निन्दावाक्यानां गरुडपुराणाद्यर्थवादवाक्यानांचदृश्य
न्तेहि शिव विष्णु पुराणादौ सर्वदेव निन्दास्तु त्यादिधर्म
शास्त्रेचमांसादि विषयेप्रायो विरुद्धानामेवशाक्यार्थे वाक्या
नितात्पर्यतस्तुनकापिविरोधः विरोधस्यैव स्वीकारेहेतौ
व्यभिचारः गारुडस्यापि शुभकर्मसु शास्त्र व्यवस्था लभ्ये
षुप्रवृत्तिरितरत्र निवृत्तिरित्यत्रैवता त्पर्यमेत त्पुष्ट्यै एवना
टकवद संभविवीभत्सभयानकवादएवमेव वेदेऽपि हिसोरो
दीद्यदरोदीत्तद्रु द्रस्यरुद्रत्व मित्यादिनार्थ वादवाक्येन जैमि
निस्मृतौ प्रथमाध्याय द्वितीय पादे।१।२।थैंयोबर्हिषिरजतंद
दातितस्य गृहेआवर्षा द्रोदनं भवतीति भयानक निन्दा
र्थवादेषु व्यवस्था अनुपपद्यमानार्थवादस्य स्वार्थेऽप्रा
माण्या दर्थान्तर कल्पने नोत्प्रेक्षादिना रोदनहेतुशोकसा
धनत्वेन विगमे रोदन जनकत्वाद्रजतस्या शुभ्रभवत्वं वि

परीतं कारणे कार्यारोप रूपातिशय मूलकंथाकथं चिदारो
प्य तदुक्ताव पितात्पर्यार्थे निन्दितत्वाच्छास्त्र व्यवस्था
च्युतम वैधंनसमाचरे दित्यर्थ लाभे विरोधानुपपत्या
अव्यवस्थाभावात् एवंकर्म विपाक शास्त्रमपि पूर्वोक्तरीत्या
पापफलरूपां मदुक्तामेव व्यवस्था माहक्कचिद वैधाविषये
विधि विरोधा दिपातेचतथैवव्यवस्थया निन्दा द्यर्थवादपर
त्वेन व्यवस्थानेया शिवपुराणादावपि विष्णवादि निन्दाया
स्तत्रच तन्निन्दाया उभय प्रशंसा परत्व मेवेत्यनु पदमुक्तं
नहि निन्दा निन्द्यं निन्दयितुं प्रवृत्ता अपितुस्तुत्यं स्तोतु
मितिहि जैमिनीयानांप्रवादः अपशवोऽन्ये गोभ्योऽश्वेभ्य
इत्यत्र वेदेऽपि १।४।२६। जैमिन्याधि करणेएषा व्यवस्था
अतएव उदिते जुहोति अनुदितेजुहोति समयाध्यु षिते
जुहोति इतित्रिधाहवनं विधाय निन्दाया य उदितेजुहोती
त्यादिनोक्तायाःकाल प्रतिज्ञा पालन प्रशंसायांपर्यवसाना
न्नविरोध इति एतदेवन्यायदर्शने २।१।५६-५८ अर्थवाद व्य
वस्थार्थ मुक्तम् यदपि विष्णु स्मृतौ श्राद्ध मांसदान विधा
नम श्वालम्भमित्यादौमांस पिण्डदान निषेधःकलौ गौत्तम
स्मृत्या दौच श्राद्धयागादौ विहित मांसस्या भक्षणेत-

न्निन्दा दौचरौरवनरका भिधानंयच्चमुन्यन्न संज्ञक मांसा तिरिक्त प्रशंसा वाक्यंयच्चमत्स्यादः सर्वमांसा दस्तस्मा न्मत्स्यान्वि वर्जयेदिति ५।१५म. भक्ष्येभ्यः पाठीनरोहि तावाद्यौ नियुक्तौहव्य कव्ययोःरा जीवान्सिंहतुण्डाश्चस शल्काँश्चैव सर्वश ५।१६।इत्यादिभ्य इतरेषां निन्दा वाक्यं मांस भक्षयिताऽमुत्रयस्य मांस मिहाद्मह मित्यादि शक्यार्थ व्याजेन ५।५५। पञ्चपञ्चनखा भक्ष्या अनुष्ट्राँश्चैकतोद च ५।१०।प. इत्यादि भक्ष्य नियमेना भक्ष्य प्रतिषेधो गम्यते अभक्ष्य प्रतिषेधेन भक्ष्य नियम इति अभक्ष्यो ग्राम्यकु क्कुट इत्यक्तेज्ञायतेएतदारण्यो भक्ष्य इतिमहाभाष्य१।१।१ नियमविधि वाक्येनेतर निषेधतदावश्यक विधानेनतदितर निन्दावाक्येमन्वादौ वेदचमा हिंस्यादिति निषेधोऽग्निषो मीयं पशुमालभेते त्यादि ब्राह्मण विधिः गोधाकालकादार्वी घाटास्तेवनस्पतीना मित्यादि मन्त्रलिङ्ग विधिर्हविभिरेके इत्यादिकार्थ वादैर भक्षणादि निन्दाचेत्यादि परस्पर विरो धःप्रतीयते सोऽपियागा तिरिक्तं भक्तिकाण्ड मन्तराऽभक्ष्या णामपेया नांच सुरा विशेषादीनाम ज्ञानिकृतानां शास्त्र व्यवस्थातिरिक्तेणवर्त्तमानां भक्षण पानादौ निषेध प्रशंसा

र्थमृ्यागीय देवदत्तादि प्रशंसातद्वदेवस्मृतौ तदातिरेकेण मुन्यन्नेति रूढिमापन्नानां प्रशंसार्थनतु तदभावाय वस्तुतो मुन्यन्नेति रूढस्यापि भक्ष्यमांस तुल्यत्वात् अदेवसात्करणे वृथाकृसर संयाव मित्यादि मनुनाऽभक्ष्यत्वोक्तेः तन्त्रेष्वपि कुलचूडामण्यादौ मांस भक्षणे मदुक्त भिन्नेस्वेष्ट देवता मन्त्रस्य दशसहस्रजपस्यकृच्छ्रा प्रत्याम्नायस्य च्यवनादि वद्विधानम् चिद्वल्लीमहानिर्वाणादौवामानन्तर दक्षिणंकरणं कल्क्यादेः कल्की पुराणादौच नाटकाख्यानवत्प्रशंसार्थ वादएव एतेनन स्मार्त्तमात्रतन्त्रसा धारणे दक्षिणवाम योर्द्वय द्रव्यभेदः क्रियावरणादि भिदया क्रमादेः प्रायोबाहु ल्येन प्रदर्शनं तत्रसर्व शाखास्थेति कर्त्तव्यता कलापोपसं हारस्य तृतीये जैमिनिना चतुर्थे व्यासेनचदर्शितत्वात् स र्वोपसंहारः क्रमादौ सतिसंभवे आवरणादौचस्व स्वदेवता ध्यान भेदेन देवानांच परमात्मानन्य भक्तिमतां पञ्चायत न्यादिदीक्षा भेदेन असंभवे विकल्पः क्रियाक्रम विकल्पव द्द्रव्यदैवतयोर्न विकल्पः देवता प्रातिनिध्यभावस्य ६।३।५ अ. जैमिनादर्शितत्वात् द्रव्याणां चोभयत्र तुल्यता लाभ स्यासक्त दर्शितत्वा द्योऽपि पायसादिरनु कल्प इति संग्रह

कृतामुक्तिः रम्भाफलंतुमत्स्यत्वे छागत्वेनतुकर्कटी इत्यादि चिह्नल्युक्त मांसादि पदार्थानु कल्पनंचतदापत्कल्पा भिप्रा येणदरिद्रस्या सतिविभवे प्रकारांतरा भावेनयथा संभवगु डपायसादि भिस्ताम्र पात्रस्थैरेव तथा कल्पनम् इति प्रद र्श्यते चिह्नलीस्थंतदर्थ कथनंप्रकरणस्थदक्षिणरूप ब्रह्मचर्ये णपुरश्चरण प्रकरण प्रशंसार्थ वाम निन्दा परत्वेनार्थ वाद रूपमेव यथाकथं चिच्छक्त्यार्थेपिद्दरिद्रार्थे योज्यम् एवंयो ऽपि पुराणेषु सृष्ट्यादि क्रमनिरूपण विशेष भेदखेदः सोपि कल्प भेदेन संतति परम्पराक्रमभेदाभिप्रायेण भूतार्थ वादेवस्तुत उपनिषत्सु क्रमनिर्देशतात्पर्या भाव विरहवद त्रापि भूतार्थवादेन तदाचरण रूपपुरा कल्पार्थवाद द्वारा निन्दित प्रशस्ता चरणानां निन्दा प्रशंसावादतात्पर्येण तदाचरण योग्यविधि निषेध रुच्यापादने तात्पर्यलब्धरि गुणग्रथितभूतार्थ वादत्वेन। कर्णौनतौ यौहरि कीर्त्ति मत्या हीनौकरौ तावुपलौ यदर्चने॥हरेर्गतौनोगुदयासमं मुखब्रो च्चारितंयेन हरेर्हिनामेतिबोध यद्धरिभक्तिस्तुत्यैदेवीभागवत पुराणानामेवंभेदानुक्त्वाप्रथमस्कन्धेकल्पभेदेनयुगपारिवर्त भेदेन कृष्ण द्वैपाय नबादरायणादीनां द्वापर संधौजन्माव

तारभेदेन नामभेदं प्रदर्शयताऽष्टाविंशतिभेकलौबोपदेव-स्य व्यासत्वमष्टा दशपुराण तदन्तर्गत देवी भागवतादा वष्टादशोप पुराण कर्त्तृत्वं महाभारतादीतिहासकर्तृत्वंच तथैवच कौर्मे प्रतिकल्पं भेदनोपलम्भः यदापि सात्विकादि भेदेन पुराणादि व्यवस्थापक श्लोकोपनिबन्धस्तमादाय चब्रह्मविष्णु रुद्रादीनां विभेदेनोपासनाभेदा धिकारिभेदा दिक मितिचोक्तम् तदपि एकस्यैव स्कन्दस्य कौर्मेतामस त्वेन तत्रान्यत्रतस्यैवसात्विकत्वेन कीर्त्तनात् सर्वस्य प्राणि जातस्य त्रिगुण प्रकृति परिणामत्वेन प्रसिद्धेश्च सर्व प्रशं सापरमेव योऽपि अप्राकृतो लीलादेहो भगवतस्स्वीकृतस्त दैच्छिको वैष्णवंमन्यैस्सोपि स्थूलषाट्कौशिक देहत्व प्रा कृतत्वयो व्याप्त त्वाल्लीलारूपेच्छा विशेषस्यापि प्रकृति द्वारै वकार्यजनकत्वेन लीलाजत्वाऽप्राकृतत्वयो विरुद्धत्वेना प्राकृतदेहवादिवादोऽसद्वादएव न्याय पराहतत्वाद प्रामा णिकत्वाद्धठमात्रत्वच्चेतनन्यूनाधिक भावेन सत्त्वादि मूलक

---

१–एते श्लोकाः परस्पर विरुद्धा इव सर्व प्रशंसार्थतात्पर्यैणा वि रुद्धाः पुराण विषये देवी भागवत भूमिका यांनीलकण्ठेनोद्धृताः

मपिनतेषां पुराणानां तत्तदुपास्य देव विशेषाणां चन्यूना
धिक भावेन व्यवस्थापननयुक्तंतेषां सर्वेषां सात्विकत्वादि
कत्वस्यचोक्तत्वात् सर्वेषामपि कालदेशभेदेन कल्पितनाम
रूपाणां सत्वाद्याधिक्ययोगेन समष्ट्यवच्छिन्नस्यैकस्यैव
परात्मनोनानादेह धारणेऽपिसाम्यस्वीकारेणतदुपासनायाः
सात्विक्यादि व्यपदेशस्यतत्पुराणेषु तथा व्यवस्थापन
स्यप्रशंसा पक्षपातित्वात्तथाच सर्वप्रशंसया सात्विक भावेन
गुणात्रितयावच्छिन्नेएव परम प्रीत्या स्वात्मात्मीयनाना
प्रकारेणो पासनादिद्वारासकलदेवोपासितपरत्वमेव शास्त्र
स्यनत्वेक देवेगुणेवाग्रहो गुणानां परस्पर मिथुनाश्रय जनन
वृत्तित्वात्सर्वेषां प्रणवघटितमन्त्रकत्वेनप्रणवस्यचरुद्रोपनि
षदिरामत पिन्यांच ब्रह्मष्णुरुद्रेश्वशिवसदा शिवात्मक
पञ्चरूपेण निरूपणेन त्रितयात्मक शक्त्यनुस्यूत रुद्रशिव
पक्षीय समष्टा विद्याक पञ्चदेवोपासनायाःस्वस्वावरण सहि
ताया एकात्रितयात्म कशक्त्यवच्छिन्न परमात्मानन्य भ
क्तित्वेन विधान लाभात् एषैवहि निश्चला भक्तिर्यातु वि
ष्णुरेको निःशक्तिकोनिवारणक उपास्य इति इतर निन्दा
वादश्च पुराणार्थानभिज्ञानां पाखण्डिनांनैषानन्य भक्ति

द्वेषभारितत्वात् निरान्तर प्रेमाख्यरागरूपैवहि भक्तिर्नात्र द्वेषगन्धोऽपिमदान्धतया परमात्मदेहनाम सुकेनचिद्युक्तः यत्करोषियद श्नासियज्जुहो षिददासियत् यत्तपस्यसिकौ न्तेयतत्कुरुष्व मदर्पण मिति गीता वाक्यमप्येतदभिप्राये णएवमेवहिसमारूढासार संसाराश्वत्थवृक्षमूलं परमात्मानं चिद्रूपंशिव शक्त्यात्म कंपश्यन्हरि भैरवंतस्यै वोपासनंचा त्मा मीयादि भिःकल्पितमेव कुर्वन्नेव संसारा नन्दफलं सत्यलोक सुखान्तमनु भवन्नेव क्रमान्मुच्यते इति तथाम त्परायणो भवेति मन्मना भवमद्भक्तो मद्याजीमांनमस्कुरु इत्यादि पूर्वोक्तो पासना विधायक मेवातिन स्मृतीनांका पिपरस्पर विरोधेनाप्रामाण्यमत एवनितान्त निर्मल स्वान्ताःपरित्यज्य निन्दास्तुति वादंशृण्वन्तोप्य शृण्वन्तइ वजीवन्मुक्त दशामालम्ब्य मानास्तिष्ठान्ति नितान्त मासा दितत्तद्देवता विशेष मूर्त्तिप्रचुरतर भक्तिजुषोऽपूर्वाःकेचन लोकगुरा स्तद्यथायदि परिमात्मा पुमानेव हरिरेव जगज्ज गदेवहरि रितिरीत्या ऽऽरोहति साकार चिन्तन समयेबुद्धौ तदा ऽर्जुनवत् नारायणा ऽऽस्यकुहरंतवसुन्दरस्मेरेन्दीवरा लोकन लोचनेन मित्रास्मदीयमनसोजनुषः कुहापिमोदं

वितन्वन्सु दृशोक्ष्यतोकि मित्यादिक मेवपरमलर रति भाव मेवसुदृढीकुर्वन्ति अथापि शिवरूपी दृदयदरी निहतचेतो लिङ्गात्मना वाजगत्कारण पालनादि समाधि निष्ठस्समारो हाति बुद्धौस्तुहिश्रुतगर्त्त सदामित्यादयुक्तरीत्या नितान्तमेत मेवरूपं पुरामृकण्डा जनि रक्षणाय लिङ्गाङ्ग निःसृतस दर्धवपुः शिवशश्रीपाशशूलहृतमृत्युभयेशशम्भो श्रीमद्ध वान्तक भवान्भवसी हवीजं चराचरजगत्सार धारापातंज गत्रये करोह्य सित पीयूषप्लवात्कुर्वान्वि राजसे इत्यादि नितान्त निर्मल स्वान्तेन पोषयन्ति हृदिस्थित मेव भक्ति भावम् अथचादित्यात्मा प्रकाश रूपएव प्रकाशते हृदय निर्दयलोडनेनतथैव निजेन भास्वन्भगवन्महः कृपाभरेण सर्वांनिजजन्तुजातं प्रकाशयन्सर्वमाति प्रमोद मानन्द मात्म न्सुखइशराजसे इत्येवमादिबहलात्मीय भावेन पोषयन्तः प्रमाणांनिरातिशय मेवनिजंमोदन्ते अथापि चेत्स्त्री रूपेणा विर्भवति बुद्धिवृत्तिस्तदैकेतु अपिमातर्जगदम्बि कतव प्राति पत्तिस्थिरतानुचिन्तनेन नकृतासेवन कौशलेन चात्किमु मातुर्क्षणदूरकृज्जनः इत्यादिबहुविधानु रोधेन मान समान मपगमयन्तस्तदुपकारभार मसहमानाः परमेवस्व निन्दा

पश्चात्तापादिना सुदृढा मेवकुर्वन्ति प्रीतिम् अथाप्य परेस
खीषु नितरांमनो यथास्तितवभामिनि भवाठिधतरिकिंतथा
मयिभवेन्नभगिनि प्रिये इत्यादि भागिनी भावेन द्रढयन्ति
भक्तिरमिणी मथापचत्वंवा कुमारउतवाकुमारी त्यादिश्रुत्यु
क्तदिशा बालिका रूपेणैवा विर्भवातिचित्त वृत्तौपरमात्माज
गदम्बिका भावयामतव भावनां मनोज्ञकृत गद्गदां अवि
स्फुटपदाक्षरांवाचमानन्द दायिनीम् इत्यादिरीत्या मनो
हरालापसूर्त्तिंहारिणींमनसाश्चिन्तयन्तःसुविपुलतराल्हादज
नितपुलकित गद्गदवाचानुकुर्वन्तःस्वमनसोविलीन भक्ति
मयभावनां ख्यापयन्ति अथापिचेत्षोडशी रूपेणाविर्भा
वतिपरमात्मवृतिर्नितरां प्रियात्वभावनयैवद्रढयान्तिरत्युत्क
र्ष मस्यां जगदम्बिकायांसैव यक्षिणी तिपुण्यजनलभ्या
यस्यांकामेशदयितायां पुरश्चर्याणवोद्धृतयोगिनी तन्त्रोक्त
भावनाक्रमेनिरुक्तदाक्षिणेऽपि तथैवसुस्फुटत्वेन नितम्बभर
विभ्रमस्फुरित दशनछदोन्नतांनासिकलांकलापातितदृशिदी
घितेदधासिप्रिय भामिनिस्फुटकचाञ्चितनदद्भ्रमद्भ्रमर
गुञ्जदब्जस्तनिरमस्वात्मानिइत्यादिहृदयरसिकरातिमावेदय
न्तोद्रढयन्तिभक्तिम्अथापिहृदयवृत्तौ सुहृदय भावेनवात्स

भावेनवास्फुरतिदेवस्तदाहरेभैरवेश्वरभवान्वपुनोंभवाहामि तिसःतथात्वंनु गोचर कृतः श्रुतेर्मूर्ध्निनिहितंयतःइत्ये वमेवमद भरालोल मृणालतन्तु सुपटीयःप्रकाशमात्र सच्चि दानन्द घनपरमात्मान मेवविषयी कुर्वन्तः स्वात्मानि द्रढय न्तिभक्तिभावं भैरवात्मानि नितान्तेमवभक्तिरसिकाःतन्त्रा प्रामाण्य साधकेहतू नांपूर्वखाण्डितत्वान्नतेषाम प्रामाण्यं स्मृति प्रामाण्येनवमस्कन्धे देवीभागवते श्रीमद्भागवते चैकादशे वैदिकेन तान्त्रिकेण स्वोक्तेनच विधानेन मूर्त्ति यन्त्रादौपूजाविधान लाभात् पुराणेषु तन्त्राणां प्रामाण्या भ्युगमाच्चनाप्रामाण्यं तन्त्रस्य तृतीय विकल्पोप्यसमञ्ज सःप्रायःस्मृत्यर्थस्यवेद लभ्यत्वेनासतश्च शिष्टाकोपे विरुद्ध मिति जैमिनि सूत्रान्मूल वेदानुमाना द्वैदिकमन्त्रादि वि नियोगेति कर्त्तव्यता कलापस्य धर्मशास्त्र पुराण तन्त्रेति संकेतितेषूपल भ्यमानत्वान्मन्त्रैक वाक्यत्वाच्च सर्वस्यस्मा त्तधर्मस्य तदुक्त व्यवस्थाया वैदिकत्वात् तृतीय विकल्प साधक हेत्वासिद्धेः स्मृतौच तन्त्राणां निन्दितत्व मितिचतु र्थविकल्पोऽप्यन्तरम समञ्जसस्तेषां स्मृतित्वस्यैवपुरा व्यव- स्थापितत्वात् स्वस्यस्व निन्दितत्वहेतोर प्रासिद्धेःनापिहि

निन्दा क्वचिल्लिखितोपलभ्यते दुष्टानां कल्पित तन्त्रार्थेन तस्य निन्दितत्वासिद्धेः निन्दितार्थकर्त्तुरेवसानिन्दानहि तन्त्रस्य नह्येषस्थाणोरपराधोयदेन मन्धोनपश्यति इति निरुक्तेऽप्युक्तिः प्रत्युत प्रशंसैवयत्रतत्र तन्त्राणामुपलभ्यते विष्णु हारीतादौ वैखान सादितान्त्रिक मार्गेण विष्णु पूजा वश्यकत्व लाभेन सर्वशाखो पसंहारस्य जैमिन्युक्तस्य लाभेनदेवता प्रतिनिधि कल्पनस्यषष्ठे जैमिनिना प्रतिषिद्धत्वाच्च भगवत उपासना लाभेन पुरश्चरण कल्पात्मक पाञ्चरात्रादि विष्णुस्मृत्यादि सहित देवीरहस्यादि वामतन्त्र प्रामाण्यस्य परमवैष्णवत्वेन स्वीकृत्य गौत्तम स्मृतौ यागोक्तहिंसादि निन्दायारौरवनरक साधनत्वेना भिधानान्मद्य मांसराहितत्वेनैव विष्णु पूजेत्यस्यानधीत वेदादि शास्त्र महामूर्ख हठि प्रलापमात्रत्वात् निन्दाभय मूलत्वाच्चएतेन तन्त्र शास्त्रेण चेद्ब्रूषेतद वैदिक संमतं मिति पुरुषोत्तमस्यशुद्‌चा द्वैतमार्त्तण्डीय लेखो नयुज्यते इतिध्येयम् स्वयमपितत्साधकत्वेन तन्त्रस्य ब्राह्मणानुष्ठेयत्वेन तादितरानुष्ठेयत्वेनच प्रदर्शितवाक्येषु तन्त्र प्रामाण्य लाभात् तथाहि श्रौतार्चनंतु विप्राणां विशेषेण सदाभवेत् श्रौतागमा

र्चनंक्षत्रे वैश्ये केवलमागमं तन्त्रेषुदीक्षितो मर्त्यो वैदिकंन स्पृशेत्कचित् वैदिकश्चापि तन्त्रेषु दीक्षितोन स्पृशेत्सदा इति वासिष्टं लिङ्ग पुराण वाक्य मुपन्यस्तं कचितन्त्रानु रोधेन धर्मं पारौणिका अपि वदन्ति तादृशोऽर्थस्तु ग्राह्यस्त न्त्रावलम्बिनेतिपराशरोक्तिश्च तत्रोद्धृता एतेन तन्त्राणां ग्राह्यत्वस्य स्वयमेव प्रतिपादनं लभ्यते यद्यपि श्रौतार्चनं तुविप्राणा मिति जातिभेद व्यवस्थापाततः प्रतीयते परन्तु पराशर वाक्य विरोधात् द्विजातीतरेषांन श्रौतार्चन मित्य स्यैवतत्परिहार फलकस्य मुख्य बाधतात्पर्यानुप पत्तिमूल कत्वेन युक्तस्यार्थस्य स्वीकारान्नकश्चनदोषा वेशेषः द्विजा तीनां श्रुत्यादि प्राधान्य मिति व्यपदेश लाभायैवतत्न तुतन्त्र निषेधाय वैश्ये केवल मगम मिति केवल शब्दा- र्थोऽपि तत्प्रधान व्यपदेशपरः योऽपि वैदिकादेः परस्परास्पृ श्यत्व प्रतिपादनं तदुभय प्रशंसार्थनहि निन्देति न्यायात् अन्यथा तान्त्रिकाणां वेद निन्द[illegible]वस्था पराशर विरोधश्च अतएव वैदिकीं तान्त्रिकींचैवसंध्यामित्याद्युभयविधसंध्या लाभः कश्चित्पौराणिका इत्युक्त्याः। योंऽश इत्युक्तेः पुराण संमतो दक्षिणरूपो ग्राह्य इतिकेचिन्मूर्खास्त दत्यन्त मस

मञ्जस मंशपदस्यावरणाद्यर्थकत्वेनचारितार्थ्यात्ततोभवत्क
ल्पितदाक्षिणस्या शास्त्री यस्य क्वाप्य संमतत्वात् वामनि-
न्दायाअपिभवत्कल्पित वामनिन्दा रूपत्वात् वामादिभेदेन
मतभेदं परिकल्प्य तदातिरिक्तत्वेन संकोचे मानाभावात्
आवरणोप संहृतेः सर्वशाखो पसंहारन्यायेन लाभाच्चमद्य
मांसयो रेवनिन्दा प्रयोजकत्वे भवत्संम्मत दक्षिण मार्गी
यपुराणेष्वपिलाभात् स्वदक्षिणसंकोचस्यस्वमत विरुद्धत्वा
द्गौत्तमस्मृतौ विपरीत भवादृशानिन्दा श्रुतेश्च यदपिवेद
तरागमंगत्वा पापीतद्धर्ममाचरेद्वेदबाह्यरताःसक्ताबहवोनर
कंगताइति पराशरवाक्यमपिद्वि जातीनां वेदंविनासंध्यादि
परित्यागेन तान्त्रिकत्वा भिमानेन वेदबाह्यत्वं प्राहनतु
सर्वोप संहारे इतितस्यापि तत्रैवतात्पर्यम् योऽपिचकारमोह
शास्त्राणिकेशवः सशिवस्तथा कापालं लाकुलं वामं भैरवं
पूर्वपश्चिमं पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः क्वचि
त्क्वचित्पुराणादौ वेदमूलेऽपि सर्वथा सन्ति निर्मूल तन्त्रां
शास्तेतु ग्राह्यानवैदिकैरिति कूर्मपुराण वाक्यम पियत्तद
पितदीय भृगुंप्रति कृष्णोक्तेन वाक्य जातेन द्विषन्तो देव
मीशानं युष्माकं वंशसंभवाः शताश्च गौत्तमे नोव्यांन

संभाष्या द्विजोत्तमैः कुर्वन्तिचावताराणि ब्राह्मणानांकुले
षुवेदवी शापविनिर्दग्धापुरादक्षाध्वरे द्विजानिन्दन्तिचमहा
देवंतमसाविष्टचेतसःवृथाधर्मचरिष्यन्ति तस्मिन्काले युगा
न्तिके येचान्ये शापनिर्दग्धा गौत्तमस्य महात्मनः सर्वेतेऽत्र
तरिष्यन्ति ब्रह्मणास्तासुयोनिषु मोहयित्वा जनान्सर्वान्द
र्शयित्वा फलानिवै भविष्यन्तित्रयी बाह्याः सर्वेपीश्वर वि
द्विषः निन्दन्तोहेश्वरंमार्गं कुशास्त्रासक्तचेतसः मिथ्याधीत
समाचारा मिथ्या ज्ञान प्रलापिनः प्राप्य कलियुंगघोरं कालि
जैःपरिपीडिताः त्यक्त्वा तपोबलं कृत्स्नं गच्छध्वंनरका
न्पुनः भविष्यति हृषीकेशः स्वाश्रितोऽपि पराङ्मुखः येये
शापाग्नि निर्दग्धादधीचस्य महर्षयः द्विषन्तो मोहितादेवं
संभूतास्ते कलिष्वेथाति कौर्मेणैव परस्पर विरोधा पत्त्यावामं
निन्दित्वा निन्दन्तो हैश्वर मित्यादिनात न्निन्दकानां नि
न्दाया उभयस्य समुच्चित्य ब्रह्मचर्यादि समुच्चिताश्रमवतां
विकल्पेन विकल्प्याश्रम ग्राहिणा मनुष्ठितत्वेन दक्षिण वाम
प्रशंसाया एवलाभात् इतिन विरुद्ध्यते निषेधस्य प्राति
प्रसवार्थत्वात् तथाच वामनिन्दार्थं मुदाहरतो विपरीतमेवा
पद्यते अतश्चक्कचिन्निर्मूलत्वादिशब्दैर्लभ्यमाना वैष्णवादि

ग्रन्थेषु वामनिन्दा कलिजैः परिपीडिता इत्येतदुक्त्या लोकानां शास्त्रा ज्ञानिनां निन्दाभयेन भोजनभट्टैः स्वसुखात्कृतातात्पर्यन्तु नास्यात्रार्थे स्वार्थं शास्त्र निन्दासमाश्रितातैः किंकिंन कुर्वन्ति स्वार्थलोकाः कथमन्यथा निन्दितस्य पाञ्चरात्रस्य स्वयंतैस्तदाचार्यैश्च ग्रहणंकृत मितिदिक् एतेन छलयोगस्तथा सांख्यं शाक्तोमार्गोऽभिधीयते लोके व्यामोहकंशास्त्रं सप्तानां बोधकः शिवः कलौजनिष्यमाणानामसुराणां क्षयायवै इतितन्निन्दकासुराणां सप्तप्रकारेण भूमिकापरिकारोपदेशासप्तक भेदेन व्यामोहद्वारा निन्दकानांक्षयायेत्यर्थः क्रमशः पुरश्चरणादि भिःप्रकारैर्धर्म संपत्तये क्रमशश्चतत्तद्देव लोक सुखस्य सप्तसुक्रमेणलाभ सिद्धये चोपदेशकः शिवो निन्दकानां स्वयंक्षय संपादको भवतीत्येदर्थ लाभेनैकत्रैव देवीलोके सर्वविधानन्द भूमिकालाभ प्रदर्शनार्थ मिति वैदिकादिक कौलान्ताचारक्रमः पुरश्चर्यादिरेकधै वेतितत्तात्पर्यम् यदपिपत्तीत्वे दीक्षयारण्डाश्चण्डा अपि भजन्तिहि दिगम्बरा इचर्मचिन्हाःसुरामांस परायणाः पापरूपादु राचारास्ते कौलाः परिकीर्त्तिता इतिकाचित्क श्लोकोमूला प्रदर्शनेनोक्तः सोऽपि नहि निन्देति वाक्येन

पूर्वोक्त कौर्म वाक्येनासुरव्यामोहाय भोजनार्थत्वायच वो-
ध्योऽन्तरङ्गता त्पर्येण प्रशंसामात्रार्थस्वकृत्यत्वेनमतस्य सुरा
मांसपरायणत्व हेतो वैदिककर्म प्रसिद्धत्वाद्वेद निन्दकत्वा
पत्तेर्व्य भिचारितत्वापत्ते श्चस्वार्था साधकत्वाच्च पत्नीदी
क्षायादम्पत्योः सहाधिकारा धिकरणेन नाविरोधः प्रत्युतत
न्निन्दायामेव वेदनिन्दारण्डानां चण्डानां दिगम्बराणांच
तन्मध्यपतितत्वेऽपि दोषस्यानुपलभ्यमानत्वेन भक्तिकान्ड
स्यदेवजपयज्ञादेः सर्वार्थत्वादिति संक्षेपः अग्रेऽपिशुद्धाद्वैत
मार्त्तण्डे पञ्चप्रेतासना रूढामित्यादि ब्रह्मविष्णुरुद्रेश्वरस
दाशिवानां प्रकर्षेण सर्वत आधिक्येन विभूति सिद्ध्यादि
भिरितानांज्ञातानांतेषुआरूढामित्यर्थस्यापरिज्ञानेन तद्व्य
क्तिदेवारूढामित्यर्थेनतथोक्त्वा विष्णवादिभ्यआधिक्यमस
हमानैर्विष्णोरेव भूतप्रेतादिष्वन्तर्भावः कृतः भूतादिरेवावि
ष्णुपदेनगृह्यते,इतितच्चत्यन्त मसमञ्जसंशक्तिविशिष्टाद्वैत
चितएवोपास्यत्वेन सर्वत्रमतेनिर्गुणपर्यवसायितयाच तस्य
स्पन्दसूत्रवैयासिकसिद्धान्तावलम्बि भिःस्वयंचवाल्लभैःश
क्तिशक्तिमतोर भेदेन तस्यैवोपास्यत्वोक्त्याच शक्तिर हित
स्यासमर्थस्य समर्थपरतन्त्रस्य चिद्भिन्नत्वेन जडत्वात् प्रत

शब्देन भूतादि । विष्णु गृह्यते इत्यस्य सकल वैष्णव विरुद्ध त्वात् वैष्णवानामत्यन्त शाक्तिकत्वात् अत्रचप्रयोगो विष्णु शक्ति रूपः। चित्त्वात् जडाभिन्नत्वात् सर्वात्मत्वात् पारमैश्व र्यात् शिवहृदयत्वादपर तन्त्रत्वात् शिवो पास्यत्वात् भूतभिन्नत्वाच्च एतेन प्रेतारूढा मितिपदमस हमानै श्चैतन्यमात्मेतिस्पन्द सूत्रमालम्ब्यत स्माद्वा एत स्मादात्मन इति श्रुत्यनुकूल प्रवृत्तस्यस्वगुरोर्वल्लभस्याशय यमजा नानैर्गुप्त्यर्थं शक्तिमतस्य पृथगोदन पाकन्यायेनस्व यंभोजनभट्टैर्लिखितस्य शाक्तमते विष्णु र्भूतोऽस्माकंशक्त् यातिरिक्तो निन्दित शक्ति भिन्न इति भावस्वमत युक्तिविरु द्धत्वात्सकल शास्त्र विरुद्धत्वात् भोजनादि लाभायान्य निन्दा प्रशंसायै एवनतु युक्तं विष्णो र्भूतत्व ख्यापनाय इतिदिक् एतेननवा स्मृतौ तन्त्राणां परिग्रह इतिपक्षोप्य पहतः। वासिष्ट लिङ्ग कौर्मेषु देवी भागवत हारीत स्कान्देषु श्रीमद्भागवतेचपद्ममष्टदलं तत्रकर्णिका केसरोज्ज्वलम् उभाभ्यांवेद तन्त्राभ्यांमह्यंतु भयासिद्धये ११। २७। २६ इत्यादौत त्परि ग्रहस्य सुस्पष्टमभिहितत्वात् 'अयंसाशिङ्क्ते इत्यादिवेद मन्त्रेऽपिस्त्री पुरुषोभय विध शिवहरिशक्त्यादि

सकलविधस्य चक्रस्य शब्दन शीलस्येव -
विद्योतमानस्व रूपस्य साकार देवतात्मक यन्त्रस्य तन्त्र
प्रसिद्धस्य वेदेऽपि प्रशंसातथैव तत्स्वरूपं गोपालता पिन्या
दौसुनिरूपितंचेति सर्वस्यहवनादि कुण्डयो न्यादेस्तन्त्र
सिद्धत्वाद्वैदिक कर्ममात्र विलोपस्तन्त्रा प्रामाण्य वादिनां
अनयाच युक्त्यानवा वैदिक मन्त्रैस्त त्क्रिया कलाप -
इति पक्षोप्यसमञ्जसः सर्वत्रपद्धतिक्रिया यांमधुवाते त्यादि
वैदिक मन्त्रोपलम्भ.त् बीजानामपि नरसिंहतापि नीराम
तापिन्यादौ साम वेदीय निधनादौ वेगानादावुपलभ्यमा
नासेव स्वरूपतोऽर्थ तश्चपर्यायनाम भिर्वेदलभ्यार्थ कत्वेन वै
दिक मन्त्रा भावस्यासिद्धेः किन्तु वेदानुपूर्व्या-
अल्पमन्त्र निर्देशो निर्दिष्ट मन्त्रस्थलेऽपि बीजमन्त्राणांच
निर्देशः सोऽपिन विरुद्ध्यते तान्त्रिकाणांतद्धर्माणांसर्ववर्ण
धर्मत्वात् नहिसत्यदयादौसन्त्र प्रयोजनम् शूद्रादीनां प्रायो
वेदेऽनाधिकारात् वैदिकतन्मन्त्र त्यागेनैवतेषां क्रिया विधा
नात् एवंरूपादीनामपि स्मृताव पिहारीतादौ विष्णु पूजा
दौतथो पलम्भेन वैदिक मन्त्र घटितत्व सामान्या भाव
वत्सकलक्रिया कलापत्वहेतुनाऽप्रामाण्य साधने व्यभिचार

दोषापत्तिश्च सर्वशाखोपसंहार न्यायेन सर्वत्र द्विजातिपद्ध
त्यादौ प्रायो वैदिकमन्त्र घटितत्वेन सामान्या भाव घटितो
क्तहेतु नैयुक्तिसहः सर्वैरेव वैष्णवाचार्यैःपाञ्चरात्रवैखानसा
दीनां गृहीतत्वेन माध्वेन पुराप्रदर्शिते स्मृत्यनवेति सूत्रेरुद्र
यामलस्यादर बोधनं सर्वज्ञ प्रणीतत्व हेतुनाक्रियते एवश्रु
ति स्मृति पुराणादेःसर्वस्य कौमारादिनाच तन्त्रस्यादरेणगृही
तत्वात्त दगृहीतत्वेनच सुतरांमुखतश्चतत्परि ग्रहस्यादरा
त्अतएव श्रीभाष्ये प्रथम सूत्रावतरणे रुद्रादीनां विष्णवा
दिवाचकत्वेनमायावच्छिन्नाचितःपरमेश्वरस्यानन्यभक्तिःप्र
दर्शितेति पुरोक्तरीत्यासर्वदेवतानांसर्वशास्त्रैक्येनलाभादा
चार्यासम्मतत्वहेतोर प्रामाण्यसाधकत्वेस्वरूपासिद्धिदोषापा
तइतिअथप्रत्यभिज्ञामाहेश्वरपाशुपतशैववैष्णवादि तान्त्रि-
कदर्शन भेदादुपास्ति भिदातन्त्राणांतत्तद्दर्शन भेदाद्भेदःस्मृ-
तिपुराण वेदादीनांषड्दर्शन भेदाच्चसिद्धान्त भेदस्त्रैकार्य
इतिचेन्न सर्वदर्शनादिमतानां क्रमतस्तात्पर्यतश्च पूर्वोत्तर
पक्षादिना भ्युपगतेन प्रति तन्त्र सिद्धान्तेनास्मदुक्त प्रत्य
भिज्ञाहार्दरहस्येनतच्छाया भूतसकलमतानामेकत्रैवसर्व
तन्त्र सिद्धान्ते पक्षपाताद भिन्नदर्शन कत्व हेतोर सिद्ध्या

वैष्णवादयु पास्योपासा भेदतत्तन्त्रत तिसिद्धान्त भेदेचासा धकत्वात् ननुविनिग मना विरहाद्भेद दर्शने एवकुतोनता त्पर्यमुऐक्येऽपिआग्रहे स्मृत्यनवेति सूत्रंप्रमाणी कुर्वताऽस्ति हिमाध्वा चार्यवर्येणभेदएवदर्शनानांतात्पर्यं मित्यवधारित मद्वैत बोधक श्रुतीनाम भेदभावनयैवयातितव्य मित्यत्रता त्पर्यादितिचेन्न अद्वैत भावनायाः प्रमात्वम प्रमात्वंवेति विकल्पासहत्वात्तथाहि प्रमात्वंचेद्द विरोधन सकलजन भ्रमसिद्ध भेदानु वादक श्रुतीनां भ्रमजनकत्वमता त्पर्यत स्समापद्येते तितन्मूलक भ्रान्तोपासना संपादित भावना भ्रमेवस्तु प्राप्त्यभावात् नहिशतशोऽभेद भावनेऽपि भिन्नं खण्डंमरीचिर्भवति१अथवस्तुत श्चिदंशाभेद प्रमात्वेन आ त्मावैजायतेपुत्र इत्यादिवद्वस्तुत श्चिदंशाभेद भावनया मित्रत्वाद्यातिशायित प्रेयोभावात्स्वानन्द लक्षणः प्रेमासंप द्यते तन्निष्ठश्चभवति तथाचवस्तुतः प्रेमात्मकश्चिद भेद भावनयो पासित देवलोकस्य देवसख्यात्मक सारूप्यसा· लोक्यसामीप्यसायुज्यमुक्ति प्राप्त्या चिन्मात्रनिष्ठस्यभूमि·

१—तात्पर्यतस्तु तेषामपितत्ति पेषेम भ्रान्तिमता संपादनेना भेद भ्रमार्थत्वमत एतदुक्तम्

का विभेदेन परमस्या व्यक्तस्य परमात्मनो लोकेनसह प्रलयेमुक्त्यातदुत्तर सृष्टौन पुनर्भव इति संप्राप्ते प्रतिसंचरे इति वाक्यैक वाक्यतया स्वोपास्य परमपुरुष मुक्तया मुक्ति रिति वेदान्तस्याद्वैत एवमथा पूर्वोक्ते तात्पर्य पर्यवसानम् कल्पितभेदमादायव्यवहारस्यकल्पितस्यै वोपपत्तौव्यवहार सत्तासंपत्तये भेदा भेद निम्बार्क एवपर्यवसान मित्य पिन यतोहि परमार्थ सन्भेदा भेदवादो भास्कर सिद्धान्तःपरमार्थ तोऽभेदो विवर्त्ता भेदो व्यवहारे परमार्थ सन्सादि रितिनि म्बादित्य व्याख्याने सुस्पष्टमभिहितः सिद्धान्तः सन्नापि वि वर्तोभेदो व्यवहारकाले परमार्थ सन्नेवन त्विवातितन्मते पर मार्थस्य विवर्त्तत्व विरोधात्पुवंमतेना भावो विद्यते इतित- त्सिद्धान्तार्थकगीता वाक्येनानादि भेदनाशायोगात्त्रै कालि काद्वैत श्रुति विरोधापत्तेश्चन सकलशास्त्र परमसिद्धान्तत्व मपितु पञ्चकोशावतरणन्यायेन पूर्वेषां भेदभेदा भेदाविशि ष्टाभेदशुद्धाभेदाऽनां क्रमरूप पूर्वोत्तरपक्षानुसारेण तात्पर्य तोऽवस्था भेदेन ज्ञानकर्म योग्यतानुसारं तन्निष्ठानामपि परमसिद्धान्तो मदुक्त निर्गुण पर्यवसायिक मद्वैतपर्यवसा यिशुद्धाद्वैत मितिमत्वैवस्व भूमिका निष्ठैःपरमार्थाभेदवाक्ः

सोहमिति प्रत्यभिज्ञा रतैरे वोपस्यस्स्त्र शारीरक नित्यकृत्य वदुपा सनीयस्तेनचस्वेष्ट देवता लोक प्राप्त्यासर्व विधानन्दानु भवेन सर्वविधोपास्य सामीप्यादि मुक्तयाच परमोपास्य मुक्तिकाले मुक्तिरिति प्रकारेण सर्वदर्शन सिद्धान्त तात्पर्यम् इतिसकलस्यवेद मूलकाष्ठा दशमहा पुराणोप पुराणेतिहासधर्म शास्त्रचतुष्षष्ठि तन्त्रोपनिषत्सूत्रग्रन्थमाहेश्वर पाशुपतशैव दक्षिण वामन्यायादिषड्दर्शनानांस्मृति शब्देनव्यपदेशस्तुल्यइतिवेदतन्मूलकस्मार्तानामेकत्रतात्पर्यम्तदनुरोधेनच सर्वेषाम विरोधात्प्रा माण्यमितिस्थितम्

इत्थंव्यधायि प्रमाण निर्णयो यदिसमय साहाय्य लाभो भविष्यति तदा प्रमेयनिर्ण योऽपिस्वमन्तव्येनसहप्रकाशयिष्यते इति निगदित मेतत्सर्व शास्त्रीयतत्वं तदाखिलमति वेद्यत्व प्रसिद्ध्यै प्रमाणम् स्मृति पदमनु सृत्यप्राप्त सर्वप्रमानं प्रभवतुखलुहिन्दु स्वार्थ धर्मार्थ बोधम् ।

इति श्रीहरिदत्त शर्मणा त्रिवेदिना विरचित-न्प्रमाण पारायणनाम रहस्य लहरी त्यभिधो

॥ ग्रन्थः समाप्तः ॥

# अशुद्धि पत्रम

| पृष्ठम्. | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | २ | ससृतौ | संसृतौ |
| २ | ६ | सावस्म | साचस्म |
| २ | १२ | स्फुटत्वात्र | स्फुटत्वादत्र |
| ३ | ३ | मिनीयये | मिनीयेय |
| ३ | ४ | गाद्दीर्ध | गाद्दीर्घ |
| ३ | ७ | प्रमाणि | प्रामाणि |
| ३ | १४ | णास् | णाम |
| ३ | १४ | मजथ | मजप्य |
| ४ | १ | ण्यास्मा | ण्यात्स्मा |
| ४ | १० | ध्याये | ध्याये |
| ५ | १५ | ब्वक्षमी | एवमी |
| ६ | २ | राणदौ | राणादौ |
| ६ | ९ | माणत | माणं त |
| ६ | ११ | प्रामाण्यि | प्रामाण्यि |
| ६ | १३ | जन्येत | जन्यत्वे |
| ६ | १५ | स्मृाति | स्मृति |
| ७ | १० | शत्तया | शक्त्या |

| पृष्ठम् | पंक्तिः | अशुद्धम् | अशुद्धम् |
|---|---|---|---|
| ८ | ११ | रेकाप | रेकोप |
| ८ | १४ | मदाधाशास्त्रगन्धा | शास्त्रगन्धासगन्धा |
| ८ | १८ | र्शननशखा | र्शनेनशाखा |
| ९ | ७-८ | मह ।भा | महाभा |
| ९ | १२ | या १५श | याः १५शं |
| १० | ३ | दि तित | दिति त |
| १० | १८ | ग्रहत्वात् | ग्रहात् |
| १० | १६ | सर्ब | सर्व |
| ११ | ३ | नुपलम्य | नुपलभ्य |
| ११ | ३ | वनाये | वनोप |
| ११ | ५ | विशष्टि | विशिष्ट |
| ११ | ५ | पुरूष | पुरुष |
| ११ | ६ | क्षण्दे | क्षणादे |
| ११ | ८ | शङ्कय | शङ्क्य |
| ११ | १० | खण्डूय | खण्डू |
| ११ | ११ | तटनु | तदनु |
| ११ | १३ | तानिाति | तानीति |
| ११ | १८ | शतया | शकुत्या |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२ | १ | ( ९२ ) | ( १२ ) |
| १२ | ९ | वुद्ध | बुद्ध |
| १२ | ११ | वारूद्रौ | वारुद्रौ |
| १२ | १८ | बुदूध | बुद्ध |
| ३१ | २ | तोपायः | तो यः |
| १३ | ८ | वेल | वैल |
| १३ | १३ | द्वैदिक | द्वैदिक |
| १३ | १६ | म.गेंय | मार्गीय |
| १४ | ९ | भुख्य | मुख्य |
| १४ | १५ | चेद्वौहि | चाद्रिहि |
| १४ | १७ | नक्षप | मेव वक्ष्य |
| १४ | १८ | निश्चयोन | निश्चयेन |
| १५ | २ | पतौ | पत्तौ |
| १५ | ४ | सरोह | संरोह |
| १५ | १५ | संवन्धा | संबन्धा |
| १५ | ६ | पतौ | पत्तौ |
| १५ | ९ | चरणस्त | चरणास्ते |
| १५ | १४ | चकुयां नि | च कुर्योनि |

| पृष्ठम् | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५ | १७ | भिन्नोयो निज | भिन्नायेऽनिज |
| १६ | ६ | ताद्भिभ्रो | ताद्भिन्नो |
| १६ | ८ | तत्वेत्रन्मां | तत्वं चेन् मां |
| १७ | ४ | चेंन्मांसत्वं | चेन्मांसत्वं |
| १७ | ७ | कम्त्व | कत्वम् |
| १८ | ५ | लैङ्किक तवल | लैङ्गिक सकल |
| २० | १६ | प्राप्रौ | प्राप्तौ |
| २० | १७ | दश्चतद्विषयत्व | देश्चतद्विषयत्वे |
| २० | १९ | प्रशासया | प्रशंसया |
| २० | २२ | विशेषण | विशेषेण |
| २१ | १ | त्यादेर्यः | त्यादे र्य. |
| २१ | १८ | रीनपक्षे | रीतपक्षे |
| २४ | १५ | तद्धर्मा | तद्धर्मदेशकाला |
| २४ | ८ | पूर्व प्राबाल्येन पूर्वं | प्रबल्येन |
| २४ | ११ | बलावल | बलाबलं |
| २४ | १७ | रूढया | रूढ्या |
| २४ | १९ | । १८ मा | । १८ शा |
| २४ | २० | क्रमाषे | क्रमाऽपे |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २४ | २० | वल्पे | बल्ये |
| २४ | २१ | कार | कारः |
| २५ | ११ | ङ्कयम् | ङ्कयम् |
| २५ | १४ | ,मे | १मे |
| २५ | १५ | पशी | णशी |
| २६ | ५ | रैंतो | रेतो |
| २६ | १० | विनि | विनि |
| २६ | १२ | श्रुत्य | श्रुत्यां |
| २६ | १८ | मूच्यते | मुच्यते |
| २२ | १ | निमितगोडामाध्वी | निर्मितगौडीमाध्वी |
| २७ | ४ | शब्दो | शब्दो |
| २७ | ६ | मधूत्थं | मधूत्थं |
| २७ | ८ | कौदशवतु | कादशैवतु |
| २७ | ९ | ति रिक्तेन नि | तिरिक्तेननि |
| २७ | १४ | मितोक्षरोद्धृते | मिताक्षरोद्धृते |
| २७ | १५ | दाचेन्द्र | शेचन्द्र |
| २७ | १७ | मद्य | मद्यं |
| २७ | १८ | भेदनो | भेदेन्तो |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २७ | ५ | टिनि | दिनि |
| २८ | ५ | शङ्क्य | शङ्क्य |
| २८ | ८ | संन्यसा–प्रशंयै | संन्यासा–प्रशंसाया |
| २८ | ९ | दुम्वर | दुम्बर |
| २८ | १४ | ष्ट्यर्थ | ष्ट्यर्थ |
| २९ | ३ | रे दे क्षःत्रि | देःक्षत्रि |
| २९ | १४ | बाष्य | बाष्प |
| २९ | १७ | पाया।दे | प.पादि |
| ३० | ५ | बे।ह्रित्सौ | बेत्सौ |
| ३० | ६ | र्णवम्श्या | र्णवश्या |
| ३० | १३ | ह्मणानां | ह्मणानां |
| ३१ | १५ | पक्ष्यता | पक्षता |
| ३२ | १४ | मनुष्यातॄणां | मनुष्यातॄणां |
| ३३ | १ | धर्मोणाव | धर्माणामाव |
| ३३ | २ | नौष्ठिक | नैष्ठिक |
| ३३ | ४ | वतादेक्ष | वतो दक्षि |
| ३३ | ४ | त्वनेच | त्वेनच |
| ३३ | ६ | शवयत्वे | शक्यत्वे |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३३ | ७ | निविष्ठ | निविष्ट |
| ३३ | १४ | र्निर्वलार्नया | बाध्यानिर्वलाया |
| ३३ | १६ | आतुर। | आतुरा |
| ३४ | १ | म्वरी | म्वरी |
| ३४ | १८ | तत्राहरुिद्रादनिा | तत्राहिरुद्रादिग्रन्थानां |
| ३५ | १ | प्राम्ण | प्रामाण्य |
| ३५ | ३ | रित्यश | रित्याश |
| ३५ | ७ | सिद्धति | सिद्‌ध्यती |
| ३५ | ८ | म्द्रना | ह्रुआना |
| ३५ | १२ | पूसित | प्सित |
| ३५ | १२ | सेवज्ञ | सर्वज्ञ |
| ३५ | १२ | नधिक | नाधिक |
| ३५ | १३ | वोध | बोध |
| ३३ | ३ | भेद–क्ष्यरूपा | ऽभेद–क्ष्यरूप |
| ३६ | ७ | रणेन–११ १ | रण्येन–११ । |
| ३६ | १५ | विशाष | विशेष |
| ३६ | १७ | रूपस्यातुतद | रूपतद् |
| ३६ | १८ | भक्त | भुक्ति |

| पृष्ठम् | पंक्तिः | अशुद्धम् | अशुद्धम् |
|---|---|---|---|
| ३७ | १६ | वाधकं | बाधकं |
| ३८ | १२ | यांया | यांयां |
| ३८ | १५ | लाभ | लोभ |
| ४० | १४ | पभागे | पभोगे |
| ४१ | १७ | कनां—१८-ग्यत्वे | कानां—१८-ग्यत्व |
| ४२ | ७ | वर्ण्य | वैर्ण्य |
| ४५ | १५ | चारितः | चरितः |
| ४५ | १७ | क्य | धि |
| ४६ | ४ | तन्त्र—१३-सशाकर | तन्त्रे—१६-सुशाकम् |
| ४८ | १७ | त्पाज्पता | त्याज्यता |
| ४९ | १६ | कवरणं | करणं |
| ५० | १६ | तेवैश्वेर | तैवश्वरे |
| ५१ | १३ | स्वाकारेण | स्वीःकारेण |
| ५१ | १५ | ए।वेत्य | एवेत्य |
| ५२ | ८ | चारुे | चारे |
| ५२ | ९ | द्धतैः—मर्ष | द्धतैः—मयः |
| ५२ | १० | श्वर्व | श्रव |
| ५२ | ६१ | शाकटी—भ्रव | शूकरी—ध्रुव |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५२ | १५ | तर | तत् |
| ५२ | १६ | वौभित–योह्नि | वोधित–योनि |
| ५३ | १२ | काऽ | काण्ड |
| ५४ | १३ | पाप्म | पाप्मँ |
| ५५ | १ | भयोः–पूर्वः | वामयोः–पूर्व |
| ५५ | १२ | वंन्याय | वज्र्याय |
| ५५ | १७ | सिद्ध्यात | सिद्ध्याति |
| ५६ | १ | वामो | दाक्षिणवामे |
| ५९ | ५ | प्रहेप्र | अ.७ आ. |
| ६० | ७ | निर्मथ्य | निर्मन्थ्य |
| ६१ | ७ | रविष्टि | रःसृष्टि |
| ६१ | १३ | प्रवि | अवि |
| ६२ | १४ | ।१।२। | १।२।४ |
| ६३ | ७ | याशिव | शिव |
| ६३ | ८ | प्रशसा | प्रशंसा |
| ६४ | १८ | मानां | मानानां |
| ६६ | १ | दांत्तरा | रान्तरा |
| ६७ | १२ | योव्या | योर्व्या |

| पृष्ठम्. | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६८ | २ | नन | नंन |
| ६९ | १० | समा | सना |
| ७० | १ | क्ष्यते | क्षसे |
| ७१ | १ | भवसी | भवती |
| ७१ | ४ | पापच | धापिच |
| ७१ | ६ | दांअ | दाम्।अ |
| ७३ | १ | निन्दा | निन्दा |
| ७३ | १ | शुद्चा | शुद्धा |
| ७५ | १३ | लाकुल | लाकुलं |
| ७८ | ५ | दम्यत्यो | दम्पत्योः |
| ७८ | ७ | कान्ड | काण्ड |
| ७८ | १४ | पर्दने | पदेन |
| ७८ | १८ | प्रत | प्रेत |
| ७८ | ११ | नपून्यां | नृपुर्व्यां |